बहु[1]प्रकारा मयि तस्य पूजा
　　कृता जिनस्य द्विपदोत्तमस्य ।
अर्थाय लोकस्य सदेवकस्य
　　इमं समाधिं प्रतिकाङ्क्षता सदा ॥ ८ ॥

सपुत्रदारेण मि प्रव्रजित्वा　　5
　　शालेन्द्रराजस्य जिनस्य अन्तिके ।
चतुर्दशवर्षसहस्रकोटियो
　　अयं समाधिः परिगृच्छितो मया ॥ ९ ॥

अशीति गाथा नियुता सहस्रा-
　　ण्यन्ये च कोटीशत विम्ब[2]राणाम् ।　　10
तस्योद्गृहीतः सुगतस्य अ[3]न्तिका-
　　　दितः समाधेः परिवर्त ए[4]षः ॥ १० ॥

हस्ता शिरा भार्य तथैव पुत्रा　　N 28
　　रत्नं प्रभूतं तथ खाद्यभोज्यम् ।
न किंचि द्रव्यं मि न त्यक्तपूर्वम्　　15
　　इम समाधिं प्रतिकाङ्क्षता वरम् ॥ ११ ॥

स्मरामि बुद्धान सहस्रकोटियो
　　तदु[5]त्तरे यत्तिक गङ्गवालुकाः ।
येहि स्थिहित्वा इह गृध्रकूटे
　　अयं समाधिर्वर शान्त देशितः ॥ १२ ॥　　20

सर्वे च शाक्यर्षभनामधेयाः
　　सर्वे[6]षु चो राहुल नाम पुत्राः ।
आनन्द[7]नामा परिचारकाश्च
　　कपिलाह्वयाः प्रव्रजिताश्च सर्वे ॥ १३ ॥

अग्रेयुगं कोलितशारिपुत्रा　　25
　　स[8]मनाम सर्वे च अभूषि तायिनः ।
स[9]मनामिका चो[10] तद लोकधातुः
　　सर्वेऽपि चोत्पन्न कषायकाले ॥ १४ ॥

---

१ B om. from °प्रकारा down to मि in 1a. २ AC विस्तराणां for विम्बराणाम्. ३ BC मेऽन्तिका° for अन्तिका°. ४ B एकः for एषः. ५ B ततोत्तरे यान्ति जगङ्गवालुकाः ; C ततोत्तरे यान्तिक गङ्ग° for the line. ६ A सर्वेषं च for सर्वेषु चो. ७ B आनन्दनाना for °नामा. ८ B सहनाम for समनाम. ९ A सहस्रनामिकां for समनामिका. १० A च for चो.

N 29 सर्वे मया सत्कृत ते नरेन्द्रा
इमां चरन्तेन मि बोधिचारिकाम्।
यावन्ति [1]चो काचि जिनान पूजा
[2]सर्वा कृता एतु समाधिमेषता ॥ १५ ॥

5 प्रतिपत्तिय एष समाधि लभ्यते
बहुप्रकारा प्रति[3]पत्तिरुक्ता।
गुणेषु सर्वेषु प्रतिष्ठितस्य
न दुर्लभस्तस्य समाधिरेषः ॥ १६ ॥

रसेष्वगृध्रस्य अलोलुपस्य
10 कुलेष्वसक्तस्य अनीर्षुकस्य।
मत्रीविहारस्य[4] अमत्सरस्य
न दुर्लभस्तस्य समाधिरेषः ॥ १७ ॥

सत्कारलाभेषु अनर्थिकस्य
आजीवशुद्धस्य अकिंचनस्य।
N 30 15 विशुद्धशीलस्य विशारदस्य
न दुर्लभस्तस्य समाधिरेषः ॥ १८ ॥

आरब्धवीर्यस्य अतन्द्रितस्य
र[5]ण्याधिमुक्तस्य धुते स्थितस्य।
नैरात्म्य[6]क्षान्तीय प्रतिष्ठितस्य
20 न दुर्लभस्तस्य समाधिरेषः ॥ १९ ॥

सुदान्तचित्तस्य अनुद्धतस्य
ईर्याय च[7]र्याय प्रतिष्ठितस्य।
त्या[8]गाधिमुक्तस्य अमत्सरस्य
न दुर्लभस्तस्य समाधिरेषः ॥ २० ॥

25 अनुव्यञ्जनलक्षणा बुद्धधर्मा
येऽष्टादशा कीर्तित नायकेन।
बलाविशारद्य न तस्य दुर्लभा
धारेति यः शान्तमिमं समाधिम् ॥ २१ ॥

---

१ A च for चो. २ B समकृता for सवा कृता. ३ A °पत्तियुक्ता for ०पत्तिरुक्ता. ४ B मैत्राविहारिस्य अक्रोधनस्य for the line. ५ A अरण्यवासस्य ; B अरण्यवासिस्य for रण्याधिमुक्तस्य. ६ B °क्षान्तिये for °क्षान्तीय. ७ A पर्याय for चर्याय. ८ B त्यागाभियुक्तस्य for °धिमुक्तस्य.

बुद्धेन ये चक्षुष दृष्ट[१] सत्त्वा-
    स्ते[२] एककालस्मि भवेयु बुद्धाः ।
तेषैकएकस्य भवेयुरायुः[३]
    अचिन्तियाकल्पसहस्रकोटियः ॥ २२ ॥

तेषैकएकस्य[४] शिरो भवेयुः
    सर्वु[५] समुद्रेषु यथैव वालुकाः ।
यावन्ति ते सर्व शिरो भवेयुः
    शिरे शिरे जिह्व भवेयु तात्तिकाः ॥ २३ ॥

ते तस्य सर्वे भणि आनुशंसा
    यो गाथ धारेय्य इतः समाधितः ।
न किंचिमात्रं परिकीर्तितं भवेत्
    किं वा पुनर्यो हि शिक्षित्व धारये ॥ २४ ॥

धूतान् समादाय गुणांश्च वर्तते
    स्पृहेन्ति[६] देवासुरयक्षगुह्यकाः ।
राजान भोन्ति अनुयात्रं[७] तस्य
    धारेति यः शान्त समाधि दुर्लभम्[८] ॥ २५ ॥

परिगृहीतो भवति जिनेभि-
    र्देवाश्च नागाः सद आनुयात्राः ।
प्रत्यर्थिकास्तस्य श्रियं[९] नो सहन्ति
    धारेति यः शान्त समाधि दुर्लभम् ॥ २६ ॥

अनन्तु तस्य प्रतिभानु भोति
    अनन्त सूत्रान्तसहस्र भाषते ।
न तस्य विष्ठा नु कदाचि भोति[१०]
    धारेति यः शान्तमिमं समाधिम् ॥ २७ ॥

द्रक्ष्यन्ति बुद्धममिताभु नायकं
    सुखावतीं चाप्यथ लोकधातुम् ।
ये पश्चिमे कालि महाभयानके
    समाधि श्रुत्वा इमु धारयेयुः ॥ २८ ॥

---

१ A दुष्टसत्त्वाः for दृष्ट सत्त्वाः. २ B ते एकस्मिन् भवेषु बुद्धाः; C भवेय बुद्धाः for the line. ३ A अयं for आयुः. ४ A om. the line. ५ A सर्वः for सर्वु. ६ A स्पृशन्ति for स्पृहेन्ति. ७ A अनुयात्र. ८ AB दुर्दृशम् for दुर्लभम्. ९ A प्रियमावहन्ति for श्रिय नो सहन्ति. १० B भोन्ति or भोति.

प्रकाशयित्वा इमु आनुशंसा
अध्येषते शास्तु[1] स्वयं स्वयंभूः ।
परिनिर्वृतस्य[2] मम पश्चिकाले
समाधि धारेथ इमं विशुद्धम् ॥ २९ ॥

5 ये केचि बुद्धा दशसु[3] दिशासु
अतीतकालेऽपि[4] च प्रत्युत्पन्नाः ।
सर्वे जिना अत्र समाधिशिक्षिता
बुध्यन्ति बोधिं विरजामसंस्कृताम्[5] ॥ ३० ॥

इति श्रीसमाधिराजे शालेन्द्रराज[6][ पूर्वयोग ]परिवर्तो नाम द्वितीयः ॥

---

१ A भोन्तु स्वयं for शास्तु स्वयं. २ A परिनिर्वृतस्यो समयश्च काले for the line. ३ AB दिसता मुनिर्वृता for दशसु दिशासु. ४ AB. अनागता ये च प्रत्युत्पन्नाः for the line. ५ C अचिन्तिताम् for असंस्कृताम्. ६ AC om. °पूर्वयोग.°

# ३

## भूतगुणवर्णप्रकाशनपरिवर्तः ।

तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म—तस्मात्तर्हि कुमार यो बोधिसत्त्वो महासत्त्व आकाङ्क्षति तथागतस्यार्हतः सम्यक्संबुद्धस्य भूतं[1] बुद्धगुणवर्णं संप्रकाशयितुं नो चार्थतो वा व्यञ्जनतो वा पर्यादानं[2] गन्तुं सर्वं च मे वचनं बुद्धपरिगृहीतं निश्चरितुमिति,[3] तेन कुमार बोधिसत्त्वेन महासत्त्वेन सर्वसत्त्वानामर्थाय अयं समाधिरुद्ग्रहीतव्यः पर्यवाप्तव्यो धारयितव्यो वाचयितव्यः प्रवर्तयितव्यः उद्देष्टव्यः[4] स्वाध्यातव्यः अरणाभावनया भावयितव्यो बहुलीकर्तव्यः परेभ्यश्च विस्तरेण संप्रकाशयितव्यः । कतमे च ते कुमार तथागतस्य भूता[5] बुद्धगुणाः ? इह कुमार बोधिसत्त्वो महासत्त्वोऽरण्यगतो वा वृक्षमूलगतो वा अभ्यवकाशगतो वा शून्यागारमध्यगतो[6] वा[7] एवं[8] प्रतिसंशिक्षते—एवं स भगवांस्तथागतोऽर्हन् सम्यक्संबुद्धो विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् । निष्यन्दः स तथागतः पुण्यानाम् । अविप्रणाशः कुशलमूलानाम् । अलंकृतः क्षान्त्या । आगमः पुण्यनिधानानाम् । चित्रितोऽनुव्यञ्जनैः[9] । कुसुमितो[10] लक्षणैः । प्रतिरूपो गोचरेण[11] । अप्रतिकूलो दर्शनेन । अभिरतिः श्रद्धाधिमुक्तानाम् । अनभिभूतः प्रज्ञया । अनवमर्दनीयो बलैः । शास्ता सर्वसत्त्वानाम् । पिता बोधिसत्त्वानाम् । राजा आर्यपुद्गलानाम् । सार्थवाह आदिकर्मिकाणाम्[12] । अप्रमेयो ज्ञानेन । अनन्तः प्रतिभानेन । विशुद्धः स्वरेण । आस्वादनीयो घोषेण । असेचनको[13] रूपेण । अप्रतिसमः कायेन । अलिप्तः कामैः । अनुपलिप्तो रूपैः । असंसृष्ट आरूप्यैः । विमुक्तो दुःखेभ्यः । विप्रमुक्तः[14] स्कन्धेभ्यः । विसंयुक्तो धातुभिः । संवृत आयतनैः । प्रतिच्छन्नो[15] ग्रन्थैः । विमुक्तः परिदाहैः । परिमुक्तस्तृष्णायाः । ओघादुत्तीर्णः । परिपूर्णो ज्ञानेन । प्रतिष्ठितोऽतीतानागतप्रत्युत्पन्नानां बुद्धानां भगवतां ज्ञाने । अप्रतिष्ठितो निर्वाणे । स्थितो भूतकोट्याम् । स्थितः[16] सर्वसत्त्वोल्लोकनीयायां भूमौ । इमे ते कुमार तथागतस्य भूता बुद्धगुणाः । एभिर्बुद्धगुणवर्णैः[17] समन्वागतो बोधिसत्त्वो महासत्त्व इमं समाधिमागम्य अनाच्छेद्येन[18] प्रतिभानेन तथागतस्यार्हतः सम्यक्संबुद्धस्य भूतं बुद्धगुणवर्णं संप्रकाशयन्[19] नो चार्थतो नो व्यञ्जनतश्च पर्यादानं गच्छति । सर्वं चास्य वचनं बुद्धपरिगृहीतं निश्चरति ॥

अथ[20] भगवांस्तस्यां वेलायामिमा[21] गाथा अभाषत—

> न सुकरु[22] जिनवर्ण सर्वि वक्तुं
>
> बहुमपि कल्पसहस्र भाषमाणैः ।

---

१ B भूतबुद्ध° for भूतं बुद्ध°. २ B पर्यादातु गणं for पर्यादानं गन्तुं. ३ AB निश्चरेदिति for निश्चरितुमिति. ४ B उपदेष्टव्यः for उद्देष्टव्यः. ५ A om. भूता. ६ B om. °मध्य°. ७ C adds रहोगतः प्रतिसंलीनो वा after वा. ८ AB इत्यपि for एवं. ९ A om. अनु°. १० C क्षान्त्यः आगमः पुण्यानि for कुसुमितो. ११ A गौरवेण for गोचरेण. १२ A °कर्मिणाम्; B कर्मकानाम् for °कर्मिकाणाम्. १३ B आसेचनो. १४ A om. विप्रमुक्तः स्कन्धेभ्यः. १५ B प्रतिच्छिन्नो for प्रतिच्छन्नो. १६ B om. स्थितः...भूमौ. १७ A गुणैर्वर्णैः for °गुणवर्णैः. १८ B °नच्छेदेन for नाच्छेद्येन°. १९ B प्रकाशयन्तो for संप्रकाशयन्. २० After अथ, ABT add: खलु भगवानेतमेवार्थमुद्योतयन्. २१ ABT गाथाभिगीतेन विस्तरेण संप्रकाशयति स्म for इमा गाथा अभाषत. २२ C सुकर.

तथ गुण समुदानिता[1] जिनेभिः
इमु वरु शान्त समाधिमेषमाणैः ॥ १ ॥
परमसुअभिरूपदर्शनीयाः
कन्य अलंकृतगात्र प्रेमणीयाः ।
5 दत्त[2] पुरि अदीनमानसेन
इमु वरु शान्त समाधिमेषता मे ॥ २ ॥
तथ[3] मयि धनधान्यदासिदासा[4]
तथ मणिमुक्तिसुवर्णरूप्यकं च ।
N 36 त्यक्त मयि अदीनमानसेन
10 इमु वरु शान्त समाधिमेषता मे ॥ ३ ॥
मणिरतनविचित्रमुक्तहारा
रुचिर पि वसन[5] शङ्ख[6]सुवर्णसूत्रा ।
त्यक्त मयि पुरा विनायकेषु[7]
इमु वरु शान्त समाधिमेषता मे ॥ ४ ॥
15 अपरिमित अनन्त कल्पकोट्यः
परमसुगन्धिक वार्षिकाश्च ।
त्यक्त मयि जिनान चेतियेषु
परमनिरुत्तरु चित्तु संजनित्वा ॥ ५ ॥
तथरिव[8] मयि दत्तु धर्मदानं
20 पर्षगतेन जनित्व चित्रिकारम्[9] ।
न च मम समुत्पन्न जातु चित्तं
सिय मम ज्ञात्रु ददित्व धर्मदानम् ॥ ६ ॥
N 37 एतं[10] गुण समुदानितुं[11] मि पूर्वा
वन वरु सेवित नित्यमल्पशब्दम्[12] ।
30 कृपबहुलु भवामि नित्यकालं
सद मम चित्तु लभेय बुद्धज्ञानम्[13] ॥ ७ ॥
न[14] च मम कचिदाग्रहो[15] अभूषि
प्रियतरवस्तुन आत्मनोऽपि भोक्तुम् ।

---

१ C समुदानितुं. २ BC त्यक्त मय for दत्त पुरि. ३ C तत्र अपि for तथ मयि. ४ BC °दासं for °दासा. ५ A निंधत ; B नन्दने for वसन. ६ A हर्षस्वर्ण° for शंखसुवर्ण°. ७ B पुराणकेषु for विनायकेषु ८ B तथपि च for तथरिव. ९ A विचित्रिकारम् for चित्रि°. १० B om. st. 7. ११ AB °दानिता for. °दानितुं. १२ AC °शब्दाः for °शब्दम्. १३ A बुद्धज्ञाने for °ज्ञानम्. १४ C reads st. 8 after st. 11; T reads st. 9 before st. 8. १५ B इति for कचिद्.

ददमि अहु प्रभूत देयधर्मं
 सद मम चित्तु लभेय बुद्धज्ञानम् ॥ ८ ॥
अखिलमधुरसंविभागशीलः
 स्मितवदनः श्रुतिधा[1]रि स्निग्धघोषः ।
सुमधुरवचनः प्रियो बहूनां  5
 जन मम सर्वि अतृ[2]प्त दर्शनेन ॥ ९ ॥
क्षणमपि च न मत्सरी भवामि
 भवनियुतेन[3] न जातु ईर्ष्यमा[4]सीत् ।
सद अहु परितृ[5]प्त पिण्डपाते  N 38
 सकल निमन्त्रण वर्जितान्यशेषा ॥ १० ॥  10
बहुश्रुत श्रुतधारि ये भवन्ति
 गाथ इतो ध[6]रये चतुष्पदां पि ।
ते मयि सद सत्कृता अभूवन्
 परम निरुत्तर प्रेम संजनित्वा ॥ ११ ॥
बहुविधमनन्त दानु दत्तं  15
 तथपि च रक्षितु शीलु दीर्घरात्रम् ।
पूज बहु कृता विनायकेषु
 इमु वरु शान्त समाधिमेषता मे ॥ १२ ॥
पृथु विवि[7]धं अनन्त लोकधातून्
 मणिरतनैः परिपूर्य दानु दद्या[8]त् ।  20
इतु[9] धरयि समाधितश्च गाथाम्
 इमु तत्पुण्य विशिष्यते उदारम् ॥ १३ ॥
यावत पृथु केचिदस्ति पुष्पा
 तथरिव गन्ध मनोरमा उदाराः ।
तेहि जिनु महेय्य पुण्य[10]कामा  25 N 39
 बहुमपि कल्पे[11] अनन्त अप्रमेयान् ॥ १४ ॥
यावत पृथु केचिदस्ति वाद्या
 त[12]थ बहु भोजन अन्नपानवस्त्राः ।
तेहि जिनु महेय्य पुण्यकामा
 बहुमपि कल्प अनन्त अप्रमेयान् ॥ १५ ॥  30

---

१ B श्रुतधार. २ B अतृष्ण for अतृप्त. ३ BC °नियुतेषु for °तेन. ४ A ईर्ष्य आसीत्. ५ BC परितुष्ट for °तृप्त. ६ A चरेय for धरये. ७ A पृथु विविधमनन्तलोकधातु for the line. ८ A दत्तं for दद्यात्. ९ A इमु धरेयि for इतु धरयि. १० B पुण्यकामो. ११ A कल्पमनन्तमप्रमेयान्. १२ A कन्यास्तथ; B वाद्यस्तथ for तथ बहु.

यश्च नरु जनित्व बोधिचित्तम्
अहु जिनु भेष्युं[1] स्वयंभु धर्मराजः।
गार्थेमिमु[2] धरे समाहितैकां
ततो विशिष्यते पुण्यमुदारम्॥ १६॥

N 40 5 यावत पृथु गङ्गवालिकाः[3] स्यु-
स्तावत कल्प भणेय आनुशंसा।
न च परिक्षय शक्यु कीर्त्यमाने[4]
बहुतर पुण्यसमाधि धारयित्वा॥ १७॥

तस्मात्तर्हि[5] कुमार बोधिसत्त्वेन महासत्त्वेन उद्ग्रहीतव्यो धारयितव्यो वाचयितव्यः 10 पर्यवाप्तव्यः। उद्गृह्य धारयित्वा वाचयित्वा पर्यवाप्य अरणाभावनायोगमनुयुक्तेन च भवितव्यम्। तद् भविष्यति बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च। अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत—

तस्माच्छ्रुत्वेति[6] बुद्धानामानुशंसान् सुभद्रकान्।
क्षिप्रमुद्दिशथा एतं समाधिं बुद्धवर्णितम्॥ १८॥
15 त्रिसप्ततिबुद्धकोट्यः पूर्वजातिषु सत्कृताः।
सर्वेहि तेहि बुद्धेहि इदं सूत्रं प्रकाशितम्॥ १९॥
महाकरुणजेतारमिदं सूत्रं निरुच्यते।
बाहुश्रुत्यस्मि शिक्षित्वा बुद्धधर्मा न दुर्लभाः॥ २०॥
भेष्यन्ति पश्चिमे काले निर्वृते लोकनायके।
20 बहु असंयता भिक्षु बाहुश्रुत्ये अनर्थिकाः॥ २१॥
N 41 शीलस्य वर्ण वक्ष्यन्ति शीलेन च अनर्थिकाः।
समाधिवर्णं वक्ष्यन्ति समाधिय[7] अनर्थिकाः॥ २२॥
प्रज्ञाय वर्ण वक्ष्यन्ति प्रज्ञाय च अनर्थिकाः।
विमुक्त्या[8] बहु भाषन्ते विमुक्त्या च अनर्थिकाः॥ २३॥
25 चन्दनस्य यथा कश्चिद् भाषते पुरुषो गुणान्।
ईदृशं चन्दनं नाम गन्धजातं मनोरमम्॥ २४॥
अथान्यः पुरुषः कश्चिदेवं पृच्छेत तं नरम्।
गृहीत चन्दनं किंचिद् यस्य वर्ण प्रभाषसे॥ २५॥

---

१ B भेषि for भेष्यु. २ A गाथमितु धरेत्समाधितौक्रां for the line. ३ A °वालुकाः for वालिकाः ४ C कीर्तना ये for कीर्त्यमाने. ५ AB om. this para in prose. ६ C श्रुणित्वैव for श्रुत्वेति. ७ B समाध्याने for समाधिय. ८ ABT विमुक्तिवर्णं भाषन्ते.

स नरं तं प्रतिब्रूयाद् गन्धवर्णं ब्रवीम्यहम्।
जीविकां येन कल्पेमि तं च गन्धं न वेद्म्यहम्॥ २६॥

एवं योगेऽप्ययुक्तानां शीलवर्णेन जीविका।
प[1]श्चिमे भेष्यते काले शीलं चैषां न भेष्यते॥ २७॥
ए[2]वं योगेऽप्ययुक्तानां समाधिवर्णेन जीविका।
पश्चिमे भेष्यते काले समाधिश्चैषां न भेष्यते॥ २८॥
ए[3]वं योगेऽप्ययुक्तानां प्रज्ञावर्णेन जीविका।
भेष्यते पश्चिमे काले प्रज्ञा चैषां न भेष्यते॥ २९॥
एवं योगेऽप्ययुक्तानां विमुक्तिवर्णेन जीविका।
भेष्यते पश्चिमे काले विमुक्तिश्चैषां न भेष्यते॥ ३०॥

यथ पुरु[4]षु दरिद्रु कश्चिदेव
 सचे परिभूतु भवेन्महा[5]जनस्य।
स च ल[6]भति निधानु पश्च[7]काले
 ध[8]नपति भूत्व जनान सत्करेय्या॥ ३१॥
एवमिमु न समाधि यात्र लब्धो
 न च बहुमतो भवतीह बोधिसत्त्वः।
मरुमनुजकुम्भाण्डराक्षसा नो
 य[9]थ पुरुषु दरिद्रु अर्थहीनः॥ ३२॥
यद पुनरिय लब्ध भोति[10] भूमी
 अतुलियु धर्मनिधानु पण्डितेन।
मरु मनुज स्पृहं जनेन्ति तत्र
 स च धनु देति निरुत्तरं प्रजानाम्॥ ३३॥
त[11]स्मै इमि श्रुणित्व आनुशंसां
 परमप्रणीतयः कीर्तिता जिनेन।
सर्व जहिय ज्ञात्रलाभसौख्य-
 मिमु वरमुद्दिशथा समाधि शान्तम्॥ ३४॥
ये केचि बुद्धा दिशता सुनिर्वृता
 अनागता येऽपि च प्रत्युत्पन्नाः।
सर्वे च शिक्षित्व इह समाधौ
 बोधिं विबुद्धा अतुलामचिन्ति[12]याम्॥ ३५॥

---

१ C कश्चि मे for पश्चिमे. २ AC om. st. 28. ३ C एवमयुक्तयोगानां. ४ A अपरपुरुषु for पुरुषु. ५ A महाधनस्य for महाजनस्य. ६ A भवति for लभति. ७ B पश्चिकाले for पश्च°. ८ B धनकरि ज्ञात्व सत्करेया for the line. ९ BC यथ स for यथ. १० AB शान्तभूमि for भोति भूमी. ११ AB तस्य for तस्म. १२ C अचिन्त्यां for अचिन्तियाम्.

चन्द्रप्रभः कुमारु हृष्टचित्तः
पुरतु जिनस्य स्थिहित्व वाच भाषी ।
N 44 अहु[1] पुरुषवरस्य निर्वृतस्य
सुकिसरि[2] कालि इदं धरिष्ये सूत्रम् ॥ ३६ ॥
5 काय अहु[3] त्यजित्व जीवितं च
तथपि च सौख्य यदस्ति लोके ।
तत्र अहु महाभयेऽपि काले
इमु वरु शान्त समाधि धारयिष्ये ॥ ३७ ॥
महकरुण जनित्व सत्त्वकाये
10 सुदुखित[4] सत्त्व अनाथ प्राप्त दृष्ट्वा ।
तेष्वहं[5]मुपसंहरित्व मैत्री-
मिमु वर शान्त समाधि देशयिष्ये ॥ ३८ ॥
पञ्चशत अनून तस्मिन् काले
य उत्थित तत्र समाधिधारकाणाम् ।
15 पूर्वंगम कुमार तेष आसी-
दिह वरसूत्रपरिग्रहे उदारे ॥ ३९ ॥

इति श्रीसमाधिराजे भूत[6]गुणवर्णप्रकाशनपरिवर्तो नाम तृतीयः ॥

---

१ B अहं for अहु. २ C सुकसर° for सुकिसरि. ३ C मुहु: for :अहु. ४ B सुखित: for सुदुःखित. ४ A तेष्विद° for तेष्वह°. ६ B बुद्धास्तुमृतिपरिवर्तः for भूतगुणवर्णप्रकाशनपरिवर्तः.

४

## बुद्धानुस्मृतिपरिवर्तः ।

अथ[1] खलु चन्द्रप्रभः कुमारभूतो भगवन्तमेतदवोचत्—समाधिः समाधिरिति भगवन्नुच्यते । कतमस्यैतद्धर्मस्याधिवचनं समाधिरिति ? एवमुक्ते भगवांश्चन्द्रप्रभं कुमारभूतमेतदवोचत्—समाधिः समाधिरिति कुमार उच्यते यदुत चित्त[2]निध्याप्तिः । अनुपपत्तिः । अप्रतिसंधिः । प्रतिसंधिज्ञानम् । अपहृतभारता । तथागतज्ञानम् । बुद्धवृषभिता । रागचिकित्सा । दोषव्युपशमः । मोहस्य प्रहाणम् । युक्तयोगिता । अयुक्तविवर्जनता । अ[3]कुशलधर्मच्छन्दः । संसारान्मोक्षकामता । अध्याशय-प्रतिपत्तिः । जागरिकाया आसेवनम् । प्रहाणस्यानुत्सर्गः । आरक्षा शुक्लधर्माणाम् । उपपत्तिष्वविश्वासः । अनभिसंस्कारः । कर्मणामाध्यात्मिकानामायतनानाममनसिकारः । बाह्यानामायतनानाम-समुदाचारः । आत्मनोऽनुत्कर्षणम् । परेषामपंसनता । कुशले[4]ष्वनध्यवसानम् । पृथग्जनेष्वविश्वासः । शीलस्य निष्यन्दः । दुरासदता । महौजस्कता । आत्मज्ञानम् । अचपलता । ईर्यापथसंपदव-स्थानम् । अव्यापादः । अपारुष्यम् । परेष्वनुत्पीडा । मित्राणामनुरक्षणा । गुह्यमन्त्राणामारक्षणा । अविहिंसा । शीलवतामनुत्पीड[4]ना । श्लक्ष्णवचनता । सर्वत्रैधातुके अनिःश्रितता । सर्वधर्मेषु शून्यता । आनुलोमिकी क्षान्तिः । सर्वज्ञज्ञाने तीव्रच्छन्दता समाधिः समाधिरिति कुमार उच्यते । या एवेष्वेवंरूपेषु धर्मेषु प्रतिपत्तिर[5]प्रतिपत्तिः, अयं स कुमार उच्यते समाधिरिति ॥

अथ[6] खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत —

> अपावृतं मे अमृतस्य द्वारम्
> आचक्षितो धर्मस्वभावु यादृशः ।
> निदर्शिता[7] मे उपपत्ति यादृशी
> प्रकाशिता निर्वृति सानुशंसा ॥ १ ॥
>
> विवर्जनीयाः सद पापमित्राः
> कल्याणमित्राश्च निषेवितव्याः ।
> वनेषु वस्तव्य गणान् जहित्वा
> मैत्रं च चित्तं सद भावनीयम् ॥ २ ॥
>
> शुद्धं च शीलं सद रक्षितव्यं[8]
> धूतेषु पुष्टिः सद विन्दितव्या[9] ।
> त्यागश्च प्रज्ञा च निषेवितव्या ।
> न दुर्लभो एष समाधि भेष्यति ॥ ३ ॥

N 45 · 5 · N 46 · 10 · 15 · N 47 · 20 · 25

---

१ For अथ...वोचत्, AB read a passage given in App. I (No 5). २ AB चित्तस्य निध्याप्तिः. ३ B कुशल° for अकुशल°. ४ B °त्पीडनता for °त्पीडना. ५ B °रविप्रतिपत्तिः for अप्रति°. ६ For अथ ... अभाषत, AB read: अथ खलु भगवांस्तमेव सर्वधर्मसमतास्वभावविपञ्चितं समाधिमुद्भावयन् चन्द्रप्रभस्य कुमारभूतस्य तस्यां वेलायां भूयस्या मात्रया गाथाभिगीतेन विस्तरेण संप्रकाशयति स्म. ७ B निदर्शता for निदर्शिता. ८ C रक्षणीयं for रक्षितव्यं. ९ C चिन्तनीया for विन्दितव्या.

ततो लभित्वा इम शान्तभूमि
यस्यामभूमिः पृथु श्रावकाणाम्।
प्रत्यक्षभूता सुगतस्य धर्म
प्रतिलं[2]प्स्यथा बुद्धगुणानचिन्तियान् ॥ ४ ॥

दृष्ट्वा नरान् भाजनबुद्धिमन्तान्
तान् बोधिचित्त[3]स्मि समादहेथ।
अनुत्तरे ज्ञानि प्र[4]तिष्ठपित्वा
न दुर्लभो एष समाधिराजः ॥ ५ ॥

यस्यार्थि ईर्षा पुन संजनेय्या
आहारि निष्यन्दिह प्रत्यवेक्षतः।
N 48 पर्येष्टितश्चो परिभोगतश्च
न दुर्लभो एष समाधि भेष्य[5]ते ॥ ६ ॥

समाधिराजो यदि वै[6]ष शून्यतो
विशुद्धशीलानयु मूर्ध्नि तिष्ठति।
स्वभावतो धर्म सदा समाहिता
बाला न जानन्ति अयुक्तयोगाः ॥ ७ ॥

येषामयं शान्त समाधिरिष्टो
न तेष जातु भयबुद्धि तिष्ठति।
N 49 सदानुपश्यन्ति नराणमुत्तम-
मिमां निषेवित्व प्रशान्तभूमिम् ॥ ८ ॥

आकारतो यः स्मरते तथागतान्
स भोति शान्तेन्द्रियु शान्तमानसः।
अभ्रान्तचित्तः सततं समाहितः
श्रुतेन ज्ञानेन च सागरोपमः ॥ ९ ॥

अस्मिन् समाधौ हि प्रतिष्ठिहित्वा
यश्चंक्रमे चंक्रमि बोधिसत्वः।
स पश्यति बुद्धसहस्रकोटिय-
स्तदुत्तरे यात्तिक गङ्गवालुकाः ॥ १० ॥

उन्मादु गच्छेय नरस्य चित्तं
यो बुद्धधर्माण प्रमाणु गृह्णीयात्।

---

१ C शान्तभावं for शान्तभूमि. २ C प्रतिपत्स्यथा for °लप्स्यथा. ३ A °चित्तस्य for °चित्तस्मि. ४ B प्रतिष्ठिहित्वा. ५ C भेष्यथ for भेष्यते. ६ B चैष for वैष.

नैवाप्रमाणस्य प्रमाणमस्ति
अचिन्तिया सर्वगुणेहि नायकाः ॥ ११ ॥

न सोऽस्ति सत्त्वो दशसु दिशासु
यो लोकनाथेन समः कुतोत्तरि ।
सर्वे हि सर्वज्ञगुणरुपेत-
माकाङ्क्षथ लप्स्यथ बुद्धज्ञानम् ॥ १२ ॥

सु[१]वर्णवर्णेन समुच्छ्रयेण
समन्तप्रासादिकु लोकनाथः ।
यस्यात्र आलम्बनि चित्तु वर्तते
समाहितः सोच्यति बोधिसत्त्वः ॥ १३ ॥

असंस्कृतं संस्कृतु ज्ञात्व विज्ञो
निमित्तसंज्ञाय विभाविताय ।
सो आनिमित्ते भवति प्रतिष्ठितः
प्रजानती शून्यक सर्वधर्मान् ॥ १४ ॥

यो धर्मकाये भवति प्रतिष्ठितो
अभाव जानाति स स[२]र्वभावान् ।
अभावसंज्ञाय विभाविताय
न रूपकायेन जिनेन्द्रं[३] पश्यति ॥ १५ ॥

आरोचयामि प्रतिवेदयामि वो
यथा यथा बहु[४] च वितर्कयेन्नरः ।
तथा तथा भवति तन्निमित्तचित्त-
स्तेहि वितर्केहि तन्निश्रितेहि ॥ १६ ॥

एवं मुनीन्द्रं स्म[५]रतो नरस्य
आकारतो ज्ञानतो अप्रमेयतः ।
अनुस्मृतिं भावयतः स[६]दा च
तन्निम्नचित्तं भवती तत्प्रो[७]णम् ॥ १७ ॥

स चंक्रमस्थो न निषद्यमाश्रित
आकाङ्क्षते पुरुषवरस्य ज्ञानम् ।
आकाङ्क्षमाणः प्रणिधेति बोधये
भविष्यहं लोकि निरुत्तरो जिनः ॥ १८ ॥

---

१ C अवर्ण° for सुवर्ण°. २ C सर्वधर्मान् for सर्वभावान्. ३ AB जिनेन्द्रु. ४ B बहुल for बहु च. ५ A सुरतो for स्मरतो. ६ B सदैव for सदा च. ७ B प्राणम् for प्रोणम्.

स बुद्ध संजानति बुद्ध पश्यते
बुद्धान चो धर्मत प्रत्यवेक्षते ।
इह समाधिस्मि प्रतिष्ठिहित्वा
नमस्यते बुद्ध महानुभावान् ॥ १९ ॥

N 52 5
कायेन वा[1]चा च प्रसन्न मानसा
बुद्धान वर्ण भणती अभीक्ष्णम् ।
तथाहि सो भावितचित्तसंतती
रात्रिंदिवं पश्यति लोकनाथान् ॥ २० ॥

यदा[2]पि सो भोति गिलान आतुरः
10 प्रवर्तते वेदन मारणा[3]न्तिका ।
न बुद्धमारभ्य स्मृतिः प्रमुष्यते
न वेदनाभिरनुसंहरीयति ॥ २१ ॥

तथा हि तेन[4] विचिनित्व ज्ञाता
अनागता आगत धर्मशून्यता ।
15 सो तादृशे धर्मनये प्रतिष्ठितो
न खिद्यते चित्त चरन्तु चारिकाम् ॥ २२ ॥

तस्माच्छुणित्वा इमु आनु[5]शंसा
जनेथ छन्दमतुलाय बोध[6]ये ।
N 53 मा पश्चकाले परितापु भेष्यं[7]त
20 सुदुर्लभं सुगतव्राण दर्शनम् ॥ २३ ॥

अहं च भाषे[8]य प्रणीत धर्म[9]
यूयं च श्रुत्वान समाचरेथाः ।
भैषज्य वस्त्रां च गृहीत्व आ[10]तुरो-
ऽपनेतु[11] व्याधिं न प्रभोति आत्मनः ॥ २४ ॥

25 तस्माद्विधिज्ञेन विचक्षणेन
इमं समाधिं प्रतिकाङ्क्षता सदा ।
शीलं[12] श्रुतं त्यागु निषेवितव्यं
न दुर्लभो एष समाधि भेष्यति ॥ २५ ॥

इति श्रीसमाधिराजे बुद्धा[13]नुस्मृतिपरिवर्तो नाम चतुर्थः ॥

---

१ AB कायेन चित्तेन प्रसन्नमानसो for the line. २ B यथापि ; C यदा न for यदापि. ३ A मारणात्मिका for °न्तिका. ४. A तेनावितथेति for तेन विचिनित्व. ५ C आनुशंसान्. ६ B बोधयेत् for बोधये. ७ AB भेष्यति. ८ A भाष्येऽस्य for भाषेय. ९ C धर्मान्. १० C आकरो for आतुरो. ११ AC अपरेतु for अपनेतु. १२ C शीलं माणं for शीलं. १३ B समाधिपरिवर्तः for बुद्धानुस्मृति°.

## ५

## घोषदत्तपरिवर्तः ।

तत्र भगवांश्[1]चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म[2]—भूतपूर्वं कुमार अतीतेऽध्वन्यसंख्येये[3] N 54
कल्पे असंख्येयतरे विपुलेऽप्रमेये[4]ऽचिन्त्येऽपरिमाणे यदासीत् तेन कालेन तेन समयेन भगवान्
घोषदत्तो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोके उदपादि विद्याचरणसंपन्नः सुगतो लोकवि-
दनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् । तेन कालेन तेन
समयेन तस्य भगवतो घोषदत्तस्य तथागतस्यार्हतः[5] सम्यक्संबुद्धस्य अशीतिः श्रावक[6]कोट्यः 5
प्रथम[7]सन्निपातोऽभूत् सर्वेषामर्हताम् । द्वितीयः श्रावकसन्निपातः स[8]प्ततिकोट्योऽर्हतामभूत् ।
तृतीयः सन्निपातः षष्टिः श्रावककोट्योऽर्हतामभूत्[9] । तेन खलु पुनः समयेन तस्य भगवतो N 55
घोषदत्तस्यार्हतः सम्यक्संबुद्धस्य चत्वारिंशद्वर्षसहस्राण्यायुःप्रमाणमभूत् । अयं च जम्बुद्वीप ऋद्धः
स्फीतश्[10]च क्षेमश्च सुभिक्षश्च रमणीयश्च बहुजनाकीर्णमनुष्यश्चाभूत् । तेन खलु पुनः समयेन अस्मिन्
जम्बुद्वीपे द्वौ राजानावभूताम् । दृढबलश्च नाम महाबलश्च नाम । तत्रैको राजा अर्धं जम्बुद्वीपं 10
परिभुङ्क्ते, द्वितीयोऽप्यर्धं[11] परिभुङ्क्ते ऋद्धं च स्फीतं च क्षेमं च सुभिक्षं च रमणीयं च बहुजनाकीर्णमनुष्यं
च ॥ तेन कालेन तेन समयेन राज्ञो महाबलस्य विजिते भगवान् घोषदत्तस्तथागतोऽर्हन्
सम्यक्संबुद्ध उत्पन्नोऽभूत् । इति हि कुमार राज्ञा महाबलेन स घोषदत्तस्तथागतः परिपूर्णं
वर्षसहस्रं निमन्त्रितोऽभूत् सार्धं बोधिसत्त्वसंघेन भिक्षुसंघेन च कल्पिकेन परिभोगेणानवद्येन
चीवरपिण्डपात्रशयनासनग्लानप्रत्ययभैषज्यपरिष्कारेण । तेन च कुमार कालेन तेन समयेन 15
तस्य भगवतो घोषदत्तस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य बोधिसत्त्वसंघस्य सश्रावकसंघस्य
चोत्सदो लाभसत्कारश्लोकोऽभूत् । श्राद्धाश्[12]च ब्राह्मणगृहपतयो भगवतो घोषदत्तस्य N 56
तथागतस्यार्हतः सम्यक्संबुद्धस्य सबोधिसत्त्वसंघस्य चोत्सदं लाभसत्का[13]रमकार्षुः । ते च श्राद्धा
ब्राह्मणगृहपतयो भगवतो घोषदत्तस्य तथागतस्यार्हतः सम्य[14]क्संबुद्धस्य लाभसत्कारायोद्युक्ता
अभूवन् लोकामिषपूजायै यदुत राज्ञ एव च महाबलस्यानुशिक्षमाणरू[15]पम् । इति हि कुमार 20
तस्य भगवतो घोषदत्तस्य एतदभूत्—परिहीयन्ते बतेमे सत्त्वाः शीलपोषधसमादानतस्तथागताना-
मुपसंक्रमणतस्तथागतपर्युपासनतो ब्रह्मचर्यावासतः प्रव्र[16]ज्योपसंपन्नभिक्षुभावतश्च । त एते
सत्त्वास्तदनन्तरं सुखगुरुकाः । तत् कस्य हेतोः ? तथा हि तदनन्तरं सुखमिदं यदुत
लोकामिषपूजा । त एते सत्त्वा दृष्टधर्मगुरुकाश्च संपरायगुरुकाश्[17]च नात्यन्तनिष्ठाः
कुशलमूलाय । [18]तत्रेयं कुमार कतमा दुष्[19]टधर्मगुरुकता ? यदुत पञ्चकामगुणाभिप्रायता । 25

---

१ After भगवान्, ABT add पुनरपि. २ After स्म ABT read a passage given in App. I. ( No. 6 ). ३ A य कल्पैश्चासंख्येयतरैः for °ख्येये कल्पे असंख्येयतरे. ४ C अप्रमेयप्रमाणे for अप्रमेये. ५ AB om. अर्हतः. ६ C प्राणकोट्यः for श्रावक°. ७ AB प्रथमः संनिपतितो for संनिपातो. ८ C सप्त for सप्ततिः. ९ After अभूत्, ABT add : अपरिमाणाश्च बोधिसत्त्वा महासत्त्वाः सद्धर्मपरिहारका अभूवन्. १० B स्तुतः हितश्च for स्फीतश्च क्षेमश्च. ११ After अर्धं, AB add जम्बुद्वीपस्य. १२ C श्रावकाश्च for श्राद्धाश्च. १३ E °सत्कारश्लोकमकार्षुः. १४ AB घोषदत्तस्य for सम्यक्संबुद्धस्य. १५ C °रूपा दानपरमा अभूवन् दुराभूता पतिपत्या... १६ B उपसंपदतो भिक्षु° for प्रव्रज्योपसंपन्नभिक्षु°. १७ After °गुरुकाश्च, AB add : यदुत स्वर्गलोकांध्यालम्बनतया. १८ AB om. इयं. १९ AB om. दुष्ट° upto °प्रायता.

तत्र कुमार कतमा सांपरायिकगुरुकता? यदुत स्वर्गलोकाध्यालम्बनता। कतमा चात्यन्तनिष्ठकुशलमूलगुरुकता? यदुतात्यन्तविशुद्धिः। अत्यन्तविमुक्तिः। अत्यन्तयोगक्षेमता[1]। अत्यन्तब्रह्मचर्यावासः। अत्यन्तपर्यवसानम्। अत्यन्तकुशलमूलनिष्ठा[2]। अत्यन्तपरिनिर्वाणम्। N 57 यन्न्वहमेतेषां सत्त्वानां तथा तथा धर्मं देशयेयं यदमी सत्त्वा[3] यथानुत्तरया धर्मपूजया धर्मप्रतिपत्त्या 5 च तथागतं पूजयेयुः॥

अथ खलु कुमार घोषदत्तस्तथागतोऽर्हन् सम्यक्संबुद्धस्तस्यां वेलायां राज्ञो महाबलस्य तेषां च ब्राह्मणगृहपतीनां संवेजनाभिप्राय इमा गाथा अभाषत—

दानप्रदानेन अन्योन्य सेवतां
तेषान्यमन्यस्मि न भोति गौरवम्।
10 ना तादृशीं सेवन वर्णयन्ति
बुद्धा विदू येष प्रहीण वासना॥ १॥

ते तादृशा भोन्ति नराः सुसेविता
ये धर्म देशेन्ति हिताय प्राणिनाम्।
तेषान्यमन्यस्मि अभेद्य प्रेम
15 यन्मारकोटीभिरशक्यु भिन्दितुम्॥ २॥

लोकामिषेणो नर सेवतां नृणां
सर्वेष सांदृष्टिक भोति अर्थः।
निरामिषं धर्म निषेवतां[4] हि
महान्त अर्थो भवती नराणाम्॥ ३॥

20 निरामिषं चित्तु उपस्थपित्वा[5]
निरामिषं धर्म प्रकाशयित्वा।
N 58 निरामिषं येष भवेत प्रेम
ते तादृशाः क्षिप्र भवन्ति बुद्धाः॥ ४॥

न जातु कामान् प्रतिसेवमानः
25 पुत्रेषु दारेषु जनित्व[6] तृष्णाम्।
गृहं च सेवन्तु जुगुप्सनीय-
मनुत्तरां प्राप्स्यति सोऽग्रबोधिम्॥ ५॥

ये काम वर्जेन्ति यथाग्निकर्षूं[7]
पुत्रेषु दारेषु जहित्व तृष्णाम्।

---

१ After °क्षेमता, AB add: तत्र कुमार कतमत् तदत्यन्तनिष्ठ कुशलमूलं यदुतात्यन्तविशुद्धि:. २ AB अत्यन्तनिष्ठं कुशलमूलम् for the phrase. ३ AB om. यदमी सत्त्वा. ४ B निसेवितं for निषेवतां. ५ C उपस्थहित्वा. ६ AC जहित्व. ७ B जनित्व.

उत्त्रस्तु गेहादभिनिष्क्रमन्ति
　　न दुर्लभा तेष्वियमग्रबोधिः ॥ ६ ॥
न कश्चि बुद्धः पुरिमेण आसी
　　अनागते भेष्यति वा[१]वतिष्ठते ।
येहि स्थितैरेवमगारमध्ये 5
　　प्राप्ता इयमुत्तम अग्रबोधिः ॥ ७ ॥
प्रहाय राज्यं यथ खेटपिण्डं
　　वसे[२]त रण्येषु विवेककामः ।
क्लेशान् प्रहाय [३]प्रतिहत्य मारं N 59
　　बुद्ध्यन्ति बोधिं विरजामसंस्कृताम् ॥ ८ ॥ 10
यो बुद्धवीरान् यथ गङ्गवालुका
　　उपस्थिहेय्या बहुकल्पकोटियः ।
य[५]श्चो गृहातः परिखिन्नमानसो-
　　ऽभिनिष्क्रमेय्या अयु तत्र उत्तमः ॥ ९ ॥
अन्नेहि पानेहि च चीवरेहि 15
　　पुष्पेहि गन्धेहि विलेपनेहि ।
नो[६]पस्थिता भोन्ति नरोत्तमा जिना
　　यथ प्रव्रजित्वा चरियाण धर्मम् ॥ १० ॥
य[७]श्चैव बोधिं प्रतिकाङ्क्षमाणः
　　सत्त्वार्थ निर्विण्णु कुसंस्कृतातः । 20
[८]रण्यामुखः सप्त पदानि [९]प्रक्रमे
　　अयं ततः पुण्यविशि[१०]ष्टं भोति ॥ ११ ॥

अश्रौषीत् खलु पुनः कुमार राजा महाबलो भगवता घोषदत्तेन तथागतेनार्हता सम्यक्संबुद्धेन इमामेवंरूपां प्रवर्तितां नैष्क्रम्यप्रतिसंयु[११]क्तां कथाम् । श्रुत्वा च विमृशति—यथाहं भगवतो भाषितस्यार्थमाजानामि, न भगवान् दानपारमितां वर्णयति, न शीलपारमितां 25 N 60 वर्णयति । अत्यन्तनिष्ठां संवर्णयति । अत्यन्तविशुद्धिम् । अत्यन्तब्रह्म[१२]चर्यावासम् । अत्य[१३]न्तनिर्वाणं संवर्णयति । तस्यैतदभूत्—नेदं सुकरमगारमध्यावसता अनुत्तरधर्मप्रतिपत्तिं संपादयितुम्, अर्थं वा अनुप्राप्तुम् । परिहीणोऽस्म्यनुत्तराया धर्मप्रतिपत्तितः । यन्न्वहं केशश्मश्रूण्यवतार्य काषायाणि वस्त्राणि परिधाय सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रजेयम् । इति हि

---

१ AB योऽवतिष्ठते. २ AB वसेदरण्येषु for वसेत रण्येषु. ३ B विंनिहत्य for प्रतिहत्य. ४ C °वालिका. ५ C यश्चोद्गृहीतः for यश्चो गृहातः. ६ B नाप्रष्ठिता for नोपस्थिता. ७ A यथैव for यश्चैव. ८ AB अरण्या° for रण्या°. ९ AB प्रक्रमेद् for प्रक्रमे. १० AB °विशिष्टो for° विशिष्ट. ११ C °संयुक्ता गाथाः for °संयुक्तां कथाम्. १२ A °चर्यसंवासम् for °चर्यावासम्. १३ After °निर्वाणं, C adds अत्यन्तपर्यवसानम्.

कुमार राजा महाबलः सार्धमशीत्या ब्राह्मण[१]गृहपतिशतसहस्रैः परिवृतः पुरस्कृतो येन भगवान् घोषदत्तो [२]नाम तथागतोऽर्हन् सम्यक्संबुद्धस्तेनोपसंक्रामत्। उपसंक्रम्य भगवतः पादौ शिरसाभिवन्द्य त्रिः प्रदक्षिणीकृत्य एकान्तेऽस्थात्। अथ खलु कुमार भगवान् घोषदत्तो राज्ञो महाबलस्य अध्याशयं विदित्वा[४] इमं सर्वधर्मस्वभावसमताविपञ्चितं समाधिं देशयते। अथ खलु कु[५]मार राजा
5 महाबल इमं समाधिं श्रुत्वा तुष्ट उदग्र आत्तमना[६]ः केशश्मश्रूण्यवतार्य काषायाणि वस्त्राणि परिधाय

N 61

सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रजितोऽभूत्। स तथा प्रव्रजितः सन्निमं समाधिमुद्गृहीतवान्। उद्गृह्य पर्यवाप्य धारयित्वा वाचयित्वा भावनायोगमनुयुक्तो व्यहार्षीत्। स तेनैव कुशलमूलेन दशकल्पकोट्यो न जातु दुर्गतिविनिपातमगमत्, विंशतिं च बुद्धकोटीरारागयामास[७]। तेषां च तथागतानामन्तिकादिमं समाधिमश्रौषीत्। श्रुत्वा तेभ्यो बुद्धेभ्यस्तेनोद्गृहीतः पर्यवाप्तो धारितो
10 वाचितो भावनायोगमनुयुक्तो व्यहार्षीत्। स ततः पश्चात् तेनैव कुशलमूलेन दशानां कल्पकोटीनामत्ययेन परिपूर्णेन कल्प[८]शतसहस्रेण अनुत्तरां सम्यक्संबोधिमभिसंबुद्धोऽभूत्[९]। सोऽप्रमेयाणां सत्त्वानामर्थं कृत्वा पश्चाद् बुद्धपरिनिर्वाणेन परिनिर्वृतोऽभूत्। तत्र कुमार यान्यशीतिप्राणिशतसहस्राणि राज्ञा महाबलेन सार्धं भगवन्तं घोषदत्तं तथागतमुपसंक्रान्तानि, तेऽपि सर्वे इमं समाधिं

N 62

श्रुत्वा तुष्टा उदग्रा आत्तमनस[१०]ः प्रमुदिताः प्रीतिसौमनस्यजाताः केशश्मश्रूण्यवतार्य काषायाणि
15 वस्त्राणि परिधाय सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रजिता अभूवन्। तेऽपि तथा प्रव्रजिता इमं समाधिमुद्गृह्य पर्यवाप्य धारयित्वा वाचयित्वा भावनायोगमनुयुक्ता विहृत्य तेनैव कुशलमूलेन विंशतिकल्पकोट्यो न जातु दुर्गतिविनिपातमगमन्। सर्वत्र च कल्पे कल्पे बुद्धकोटीर्बुद्धकोटीरारागयामास। सर्वेषां च तेषां तथागतानामन्तिके इमं समाधिं श्रुत्वोद्गृह्य पर्यवा[११]प्य धारयित्वा वाचयित्वा भावनायोगमनुयुक्ता विहृत्य तेनैव पूर्वक्रमेण कुशलमूलेन विंशतीनां कल्पकोटीनामत्ययेन
20 ततः पश्चात् परिपूर्णदशभिः कल्पसहस्रैरनुत्तरां सम्यक्संबोधिमभिसंबुद्धा[१२] दृढशूरनामानस्तथागता अर्हन्तः सम्यक्संबुद्धा लोके उत्पन्ना अभूवन्। तेऽप्यप्रमेयानसंख्येयान् सत्त्वान् परिपाच्य तेषां चार्थं कृत्वा[१३] बुद्धपरिनिर्वृता अभूवन्। तदनेनापि ते[१४] कुमार पर्यायेण एवं वेदितव्यं यथायं समाधिर्बहुकरो बोधिसत्त्वानां [१५]महासत्त्वानामनुत्तरस्य [१६]सर्वज्ञज्ञानस्याहरणाय संवर्तत [१७]इति॥

अथ खलु भगवांश्चन्द्रप्रभस्य कुमारभूतस्य तस्यां वेलायामेतदेव पूर्वयोगपरिवर्तं भूयस्या
30 मात्रया गाथाभिगीतेन वि[१८]स्तरेण संप्रकाशयति स्म—

N 63

स्मराम्यहं पूर्वमतीतमध्वनि
अचिन्तिये कल्पि नराण उत्तमः।

---

१ C प्राणिशत° for ब्राह्मणगृहपतिशत°. २ A om. from. नाम upto संबुद्ध. ३ B °दत्तस्तथागतोऽर्हन् सम्यक्संबुद्धः. for °दत्तो. ४ B ज्ञात्वा for विदित्वा. ५ A om. कुमार. ६ After आत्तमनाः, BC add प्रमुदितः प्रीतिसौमनस्यजातः. ७ After आरागयामास, ८ C adds दशानां च कल्पकोटीनामत्ययेन सर्वेषां. C om. °शत°. ९ After °भूत्, B adds : ज्ञानशूरोनाम तथागतोऽर्हन् सम्यक्संबुद्धोऽभूत्. १० AB °मनस्काः for °मनसः. ११ A om. पर्यवाप्य; C उद्गृह्य for पर्यवाप्य. १२ C °संबुध्य for संबुद्धा. १३ After कृत्वा, AB Add: ततः पश्चाद् बुद्धपरिनिर्वाणेन. १४ AC om. ते कुमार. १५ AC om. महासत्त्वानाम्. १६ C बुद्ध° for सर्वज्ञ°. १७ AC om. इति. १८ A om. विस्तरेण.

उत्पन्नु लोकार्थकरो महर्षि
नामेन सो उच्यति घोषदत्तः ॥ १२ ॥

अशीति कोट्यः परिपूर्ण तस्य
प्रथमो गणो आसि य श्रावकाणाम्।
द्वितीय चासीत्[1] परिपूर्ण सप्तति-
स्तृतीय चो षष्ट्यरहन्तकोटियः ॥ १३ ॥ 5

सर्वे च क्षीणास्रव निष्क्लिेशाः
सर्वे च ऋद्धीवलपारमिं गताः।
वर्ष सहस्रा द्वुवि विंश चायुः
क्षेत्रं च आसीत् परिशुद्ध शोभनम् ॥ १४ ॥ 10

अभिषेकप्राप्ता परहित अप्रमेया
वशितेहि भूमिहि च सुप्रतिष्ठिताः।
आसन्न ते द्रुमवरि बोधि बोधितुं
ये बोधिसत्त्वास्त अभूषि तायिनः ॥ १५ ॥

इह जम्बुद्वीपस्मि अभूषि राजा 15 N 64
दृढबलो नाम महाबलश्च।
उपार्धु राज्यस्य तदेकु भुञ्जते
द्वितीय चार्धस्य अभूषि राजा ॥ १६ ॥

महाबलस्यो विजितस्मि बुद्धो
उत्पन्न सो देवमनुष्यपूजितः। 20
लभित्व राजा सुगतस्मि श्रद्धाम्
उपस्थिही वर्षसहस्र पूर्णम् ॥ १७ ॥

तस्यानुशिक्षी बहु अन्यसत्त्वाः
कुर्वन्ति सत्कार तथागतस्य।
लोकाभिषेणैव हि धर्मपूजया 25
सश्रावकस्य अतुलोऽभू उत्सदः ॥ १८ ॥

अभूषि चित्तं पुरुषोत्तमस्य[2]
देशिष्य धर्ममिमि धर्मकामाः।
यन्नून सर्वे प्रजहित्व कामा-
निह प्रव्रजेयुर्मम शासनस्मिन् ॥ १९ ॥ 30

---

१ A आसीत् for चासीत्. २ AB द्विपदोत्तमस्य for पुरुषो°.

स भाषते गाथ नराणमुत्तमः
संलेखिधर्मं सुगतान शिक्षाम्[1]।
N 65 गृहवासदोषांश्च अनन्तदुःखान्
प्रतिपत्ति धर्मेष्विह धर्मपूजा ॥ २० ॥

5 श्रुणित्व गाथां तद राजपार्थिवो
एको विचिन्तेति रहोगतो नृपः।
न शक्य गेहस्मि स्थिहित्व सर्वैं[2]
प्रतिपद्यितुमुत्तमधर्मपूजा ॥ २१ ॥

स राज्य त्यक्त्वा यथ खेटपिण्डं
10 प्राणिसहस्रेभिरशीतिभिः सह।
उपसंक्रमी तस्य जिनस्य अन्तिकं[3]
वन्दित्व पादौ पुरतः स्थितोऽभूत् ॥ २२ ॥

तेषां जिनो आशयु जानमानो
देशेतिमं शान्त समाधि दुर्दृशम्।
15 ते प्रीतिप्रामोद्यसुखेन प्रीणिता[4]–
स्तुष्टा उदग्रास्तद प्रव्रजिंसु ॥ २३ ॥

ते प्रव्रजित्वान इमं समाधिं
धारित्व वाचित्व पर्यापुणित्व।
न जातु गच्छे विनिपातदुर्गतिं
20 कल्पान कोट्यः परिपूर्ण विंशतिम् ॥ २४ ॥

N 66 ते तेन सर्वे कुशलेन कर्मणा
अद्राक्षु बुद्धान सहस्रकोटियः।
सर्वेषु चो तेषु जिनानुशासने[5]
ते प्रव्रजित्वेमु समाधि भावयी ॥ २५ ॥

25 ते पश्चिमे कालि अभूषि बुद्धा
दृढशूरनामान[6] अनन्तवीर्याः।
कृत्वा च अर्थं बहुप्राणिकोटिनां
ते पश्चिकालेस्मि शिखीव निर्वृताः ॥ २६ ॥

---

१ A शिष्यान् for शिक्षाम्. २ AB सर्वा for सर्वे. ३ C अन्तिके. ४ B प्रीतितुष्टा for प्रीणिता. ५ C जिनान for जिनानु°. ६ C °नामेन for °नामान.

महाबलो राजा य आसि पूर्वं
  स[1] ज्ञानशूरो अभु बुद्ध लोके ।
तदा बहु प्राणिसहस्रकोटियः
  स्थपेत्व बोधाय स पश्चि निर्वृतः ॥ २७ ॥

तस्माच्छृणित्वा इमु पश्चिकाले  5
  धारेय सूत्रमिमु बुद्धवर्णितम् ।
धारेत्विममीदृश [2]धर्मकोषं
  भविष्यथा क्षिप्र नराणमुत्तमाः ॥ २८ ॥

इति श्रीसमाधिराजे घोषदत्तपरिवर्तो नाम पञ्चमः ॥

---

१ B अज्ञान° for स ज्ञान.° २ A धर्मगञ्जं for धर्मकोषं.

## समाधिपरिवर्तः ।

N 67 तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म — तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन इमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन समाधिपरिकर्म करणीयम् । तत्र कुमार कतमत्[1] समाधिपरिकर्म ? इह कुमार बोधिसत्त्वो महाकरुणासंप्रस्थितेन चित्तेन[2] तिष्ठतां वा तथागतानां परिनिर्वृतानां वा पूजाकर्मणे उद्युक्तो भवति, यदुत
5 चीवरपिण्ड[3]पातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैः पुष्पधूपगन्धमाल्यविलेपनचूर्णचीवरच्छत्रध्वजपताकाभिस्तूर्यतालावचरैर्वैजयन्तीभिः[4] तच्च कुशलमूलं समाधिप्रतिलम्भाय परिणमयति । स न कंचिद्धर्ममाकाङ्क्षंस्तथागतं पूजयति न[5] रूपं न कामान् न भोगान् न स्वर्गान् न परिवारान्[6] । अपि तु[7] खलु पुनर्धर्मचित्तको भवति । स आकाङ्क्षन् धर्मकायतोऽपि तथागतं[8] नोपलभते,
N 68 किमङ्ग पुना[9] रूपकायत उपलप्स्यते । तस्मात्तर्हि कुमार एषां सा तथागताना पूजा यदुत
10 तथागतस्यादर्शनमात्मनश्चानुपलब्धिः कर्मविपाकस्य चाप्रतिकाङ्क्षमाणता[10] । अनया कुमार त्रिमण्डलपरिशुद्धया पूजया तथागतं पूजयित्वा बोधिसत्त्वो महासत्त्व इमं समाधिं प्रतिलभते[11] क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबुध्यते ॥

अथ खलु भगवांस्तस्यां वेलायां चन्द्रप्रभस्य कुमारभूतस्य एतदेव समाधिपरिकर्मनिर्देशं भूयस्या मात्रया गाथाभिगीतेन विस्तरेण संप्रकाशमति स्म —

15 अनन्तज्ञानस्य ददित्व गन्धान्
अनन्तगन्धो भवती नराणाम् ।
न[12] कल्पकोटीय व्रजन्ति दुर्गतिं
दुर्गन्धियं तेषु न जातु भोति ॥ १ ॥

ते कल्पकोट्यश्चरमाणु चारिकां
20 पूजित्व बुद्धान सहस्रकोटियः ।
ते ज्ञानगन्धेन[13] समुद्गतेन
भवन्ति बुद्धा वरशीलगन्धिकाः ॥ २ ॥

N 69 सचेत् पुनर्जानति वास्ति सत्त्वो
यो गन्ध[14] देती तथ यस्य दीयते ।
25 एतेन चित्तेन ददाति गन्धं[15]-
मेषास्य क्षान्तिर्मृदु आनुलोमिकी ॥ ३ ॥

---

१ C कतरः for कतमत्. २ B om. चित्तेन. ३ AB °पिण्डपात्र° for °पात°. ४ C om. वैजयन्तीभिः. ५ ABT om. न रूपं. ६ AB परिवारं for परिवारान्. ७ A च for तु. ८ After °गतं, C adds: तमनुपश्यति. ९ C पुनरन्यं धर्मकायत for पुना रूपकायत. १० AC °प्रतिकांक्षणता for °काङ्क्षमाणता. ११ After प्रतिलभते, C adds : सोऽनेन त्रिमण्डलपरिशुद्धेन परिणामेन ... परिणामयति, तस्य तत्कुशलमूल-मचिन्त्यविपाकमिमं च समाधिं प्रतिलभते. १ C कल्पान कोटीय मृजन्ति for न कल्पकोटीय व्रजन्ति. १३ C ज्ञातुगन्धेन for ज्ञानगन्धेन. १४ A गन्धजाती for गन्धदेती. ३५ A गन्धान् for गन्धम्.

तस्यैतं[1] क्षान्तिमधिमात्र सेवतः
  सचेन्नरः कांकणिच्छेद्यु[2] छिद्यते ।
कल्पान कोटयो यथ गङ्गवालिका
  न तस्य चित्तं भवति[3] विवर्तियम् ॥ ४ ॥

किं कारणं वुच्यति क्षान्ति नाम 5
  कथं पुनो वुच्यति आनुलोमिकी ।
अविवर्तिको[4] वुच्यति केन हेतुना N 70
  कथं पुनो वुच्यति बोधिसत्त्वः ॥ ५ ॥

क्षान्त्यस्मि धर्मे प्रकृतौ निरात्मके
  नैरात्म्यसंज्ञस्य क्लिेशु नास्ति । 10
खं[5] यादृशं जानति सर्वधर्मा-
  स्तस्मादिह स्या क तु क्षान्ति नाम ॥ ६ ॥

आनुलोमि[6] सर्वेष जिनान शिक्षतो[7]
  न चास्ति धर्मेश्वरते विचक्षणः ।
न बुद्धधर्मेषु जनेति संशया- 15
  नियं स क्षान्तिर्भवतानुलोमिकी[8] ॥ ७ ॥

एवं चरन्तस्य य लोकि मारा-
  स्ते बुद्धरूपेण भणेय्य वाचा ।
सुदुर्लभा बोधि[9] भवाहि[10] श्रावका
  न गृह्णोती वाक्यु न चो विवर्तते ॥ ८ ॥ 20

बोधेति सत्त्वान् विषमातु दृष्टितो N 71
  न एष मार्गो अमृतस्य प्राप्तये ।
कुमार्ग वर्णित्व पथे स्थपेति
  तं कारणमुच्यति बोधिसत्त्वः ॥ ९ ॥

क्षमिष्यनूलोमपथे स्थितस्य 25
  नैरात्म्यसञ्ज्ञाय विबोधितस्य ।
स्वप्नान्तरेऽप्यस्य न जातु भोति
  अस्ति नरो पुद्गल जीव सत्त्वः ॥ १० ॥

---

१ B तस्यैव for तस्यैतं. २ B कारुणिकश्च छेद्यते for काकणिच्छेद्यु छिद्यते. ३ C भवतीति वर्तियम् for भवति विवर्तियम्. ४ A सुरिवर्तिं यो; B अविवर्तियो for °र्तिको. ५ B om. खं. ६ B अनुलोम for आनुलोमि. ७ AC शिक्षते for शिक्षतो. ८ C क्षान्ती भरतानुलोकता. ९ A B भोति for बोधि. १० B वाक्खुखो विवर्तते; C बोधिवराहि श्रावको.

सचे[1] मारकोट्यो यथ गङ्गवालुका-
स्ते बुद्धरूपेण उपागमित्वा।
भणेयुरभ्यन्तरकायु जीवो
ते मं वदे नास्ति न यूय बुद्धा ॥ ११ ॥

ज्ञानेन जानाम्यहु स्कन्धशून्यकं[2]
ज्ञात्वा च क्लेशेहि न संवसामि।
व्याहार[3]मात्रेण च व्योहरामि[4]
परिनिर्वृतो लोकमिमं चरामि ॥ १२ ॥

यथा हि पुत्र पुरुषस्य जातु
कृतंसि नामा अयमेव नाम।
नामं[5] न तस्यो दिशता[6] सुलभ्यते
तथास्य नामं न कुतश्चिदागतम् ॥ १३ ॥

तथैव नामं कृतु बोधिसत्त्वो
न चास्य नामं दिशता सुलभ्यते।
पर्येषमाणो अयु बोधिसत्त्वो
जानाति यो एषँ[7] स बोधिसत्त्वः ॥ १४ ॥

समुद्रमध्येऽपि ज्वलेत अग्नि-
र्न बोधिसत्त्वस्य सत्कायदृष्टिः।
यतोऽस्य बोधाय उत्पन्नु चित्त-
मत्रान्तरे तस्य न जीवदृष्टिः ॥ १५ ॥

न ह्यत्र जातो न मृतो च कश्चि-
दुत्पन्न सत्त्वो मनुजो नरो[8] वा।
मायोपमा धर्म[9] स्वभावशून्या
न शक्यते जानितु तीर्थिकेहि ॥ १६ ॥

न चापि आहारविमूर्छितेहि
लुब्धेहि गृध्रेहि[10] च पात्रचीवरे।
न चोद्धतेहि नपि चोन्नतेहि
शक्या इयं[11] जानितु बुद्धबोधिः ॥ १७ ॥

---

१ B नवि for सचे. २ C स्कन्धशून्यता for °शून्यकं. ३ C व्यवहार° for व्याहार°. ४ A व्याहरामि for व्योहरामि. ५ AC न च नामं for नामं न तस्यो. ६ C दिशता अलभ्यते for दिशता सुलभ्यते. ७ C एव for एष. ८ A नरोऽपि वा for नरो वा. ९ A सर्वे for धर्म. १० C गृद्धेहि for गृध्रेहि. ११ C कृत्वा इमं for शक्या इयं.

न स्त्यानमिद्धाभिहतैः कुसीदैः
　स्तब्धेहि मानीहि[1] अनात्रपेहि[2] ।
येषां न बुद्धस्मि प्रसादु अस्ति
　न शक्यते ही वरबोधि जानितुम्[3] ॥ १८ ॥

न भिन्नवृत्तेहि पृथग्जनेहि　　5
　येषां न धर्मस्मि प्रसादु अस्ति ।
सब्रह्मचारीषु च[4] नास्ति गौरवं
　न शक्यते ही वरबोधि बुद्धितुम् ॥ १९ ॥

अभिन्नवृत्ता हिरिमन्त लज्जिनो
　येषां स्ति बुद्धे अपि धर्मे प्रेम ।　　10
सब्रह्मचारीषु च तीव्रगौरवं　　N 74
　ते प्रापुणन्ती वरबोधिमुत्तमाम् ॥ २० ॥

स्मृतेरुपस्थान इह येष[5] गोचरः
　प्रामोद्य प्रीति शयनमुपस्तृतम् ।
ध्यानानि चाहारु समाधि पानियं[6]　　15
　बुध्यन्ति तेऽपि वरबोधिमुत्तमाम् ॥ २१ ॥

नैरात्म्यसंज्ञा च दिवाविहारो
　अनुस्मृतिश्चंक्रमशून्यभावः[7] ।
बोध्यङ्गपुष्पा सुरभी मनोरमा
　ते युज्यमाना वरबोधि प्रापयी ॥ २२ ॥　　20

या बोधिसत्त्वान चरी विदूना-
　मभूमिरन्यस्य जनस्य तत्र ।
प्रत्येकबुद्धान च श्रावकाण च　　N 75
　को वात्र विज्ञो न जनेय छन्दम्[8] ॥ २३ ॥

सचेन्ममा आयु भवेत एत्तकं[9]　　25
　कल्पान कोट्यो यथ गङ्गवालुकाः ।
एकस्य रोमस्य भणेय वर्ण[10]
　बौद्धेन ज्ञानेन पर्यन्तु नास्ति ॥ २४ ॥

---

१ AB मानेहि for मानीहि. २ C अनोत्रसेहि for अनात्रपेहि. ३ AB बुद्धितुम् for जानितुम्. ४ A च नास्ति for न चास्ति. ५ B येषु गौरवं for येष गोचरः. ६ AB जानियं for पानियं. ७ B °शून्यभावनं for °भावः. ८ BC छन्दः. ९ B यत्तकं for एत्तकं. १० A भणेत्सुवर्णं for भणेय वर्णं.

तस्माच्छ्रुणित्वा इमु आनुशंसा-
मनाभिभूतेन जिनेन देशिताम्[1] ।
इमं समाधिं लघु उद्दिशेया
न दुर्लभा भेष्यति अग्रबोधिः ॥ २५ ॥

5 इति श्रीसमाधिराजे समाधिपरिवर्तो नाम[2] षष्ठः[3] ॥

---

१ A देशिकाम् for देशिताम्. २ A om. नाम. ३ B षष्ठमः for षष्ठः.

## ७

## त्रिक्षान्त्यवतारपरिवर्तः ।

तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म—तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेनेमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन त्रिक्षान्तिज्ञ[1]ानकुशलेन भवितव्यम् । तेन प्रथमा क्षान्तिः प्रज्ञातव्या । द्वितीया क्षान्तिः प्रज्ञातव्या । तृतीया क्षान्तिः प्रज्ञातव्या । त्रिक्षान्तिविशेषकुशलेन भवितव्यं त्रिक्षान्तिज्ञानविशेषकुशलेन च[2] । तत् कस्य हेतोः ? तथाहि कुमार यदा बोधिसत्त्वो महासत्त्वस्त्रिक्षान्तिविशेष[3]कुशलो भवति त्रिक्षान्तिज्ञानविशेषकुशलश्च भवति, तदायं कुमार बोधिसत्त्वो महासत्त्वः क्षि[4]प्रं समाधिं प्रतिलभते, क्षिप्रं चा[5]नुत्तरां सम्यक्संबोधिमभिसंबुध्यते । तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेनायं त्रिक्षान्त्यवतारो धर्मपर्याय उद्ग्रहीतव्यः । उद्गृह्य च परेभ्यो विस्तरेण संप्रकाशयितव्यः । तद् भविष्यति बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकार्य[6]स्यार्थाय हिताय सुखाय देवानां च मनुष्याणां चेति[7] ॥

अथ खलु भगवांश्चन्द्रप्रभस्य कुमारभूतस्येमं त्रिक्षान्त्यवतारं धर्मपर्यायं गाथाभिगीतेन विस्तरेण संप्रकाशयति स्म –

न केनचित् सार्धं[8] करोति विग्रहं
न भाषते वाचमनर्थसंहिताम् ।
अर्थे च धर्मे च सदा प्रतिष्ठितः
प्रथमाय क्षान्तीय सद निर्दिशीयति ॥ १ ॥

मायोपमान् जानति सर्वधर्मान्
न चापि सो भोति निमित्तगोचरः ।
न हीयते ज्ञान[9]विवृद्धभूमेः
प्रथमाय क्षान्तीय इमे विशेषाः ॥ २ ॥

स सर्वसूत्रान्तनयेषु कोविदः
सुभाषितेऽस्मिन्नधि[10]मुक्तिपण्डितः ।
अनन्तज्ञानी सुगतान ज्ञाने
प्रथमाय क्षान्तीय इमे विशेषाः ॥ ३ ॥

यैः[11] कश्चि धर्म श्रृणुते सुभाषितं
बुद्धान चो भाषितं[12] तन्न काङ्क्षति ।
अधिमुच्यते सर्वजिनान धर्मतां
प्रथमाय क्षान्तीय इमे विशेषाः ॥ ४ ॥

---

१ B °ज्ञानमूलेन कुशलेन for °ज्ञानकुशलेन. २ After च B C add भवितव्यम्. ३ B om. °विशेष°. ४ C om. क्षिप्रं समाधिं प्रतिलभते. ५ C om. च. ६ C °कायस्य हितार्थाय for °कायस्यार्थाय हिताय. ७ C om. इति. ८ A B C साधु for सार्धं. ९ B ज्ञानी विवृद्धिभूमेः for ज्ञानविवृद्ध°. १० B °धिमुक्त°; C °धिमुक्त° for °धिमुक्तिपण्डितः. ११ A यत्किंचिद्धर्मं; B यं किंचि; C यं कंचि. १२ A B भाषितु.

N 78 नीतार्थ[1]सूत्रान्तविशेष जानति
यथोपदिष्टा सुगतेन शून्यता।
यास्मिन् पुनः पुद्गल सत्त्व पूरुषो
नेयार्थतां जानति सर्वधर्मान्॥ ५॥

ये अस्मि लोके पृथु अन्यतीर्था[2]
न तस्य तेषु प्रतिहन्यते[3] मनः।
कारुण्यमेतेषु उपस्थपेति
प्रथमाय क्षान्तीय इमे विशेषाः॥ ६॥

आभासमागच्छति तस्य धारणी
तस्मिंश्च आभासि न जातु काङ्क्षति।
सत्यानु[4]परिवर्तिनि वाच भाषते
N 79 प्रथमाय क्षान्तीय इमे विशेषाः॥ ७॥

चतुर्ण[5] धातून सियान्यथात्वं
वाय्वम्बुतेजःपृथिवीय चापि।
न चो विवर्तेत स बुद्धबोधेः
प्रथमाय क्षान्तीय इमे विशेषाः॥ ८॥

ये शिल्पस्थाना पृथु अस्ति लोके
सर्वेषु[6] सो[7] शिक्षितु बोधिसत्त्वः।
न चात्मन उत्तरि किंचि पश्यति
प्रथमाय क्षान्तीय इमे विशेषाः॥ ९॥

अकम्पियः समथ[8]बलेन भोति
शैलोपमो भोति विपश्यनाय[9]।
न क्षोभितुं शक्यु स सर्वसत्त्वै-
र्द्वितीयाय क्षान्तीय स[10] निर्दिशीयति॥ १०॥

समाहितस्तिष्ठति भाषते च
समाहितश्चंक्रमते निषीदति।
समाधिये पारमितागतो विदु
द्वितीयाय क्षान्तीय इमे विशेषाः॥ ११॥

---

१ A नीतान्त ° for नीतार्थ°; B om. नीतार्थसूत्रान्त°. २ C अन्यतीर्थ्या for °तीर्था. ३ C प्रतिपाद्यते for प्रतिहन्यते. ४ B सत्यानपरि°; C अन्यानुपरि° for सत्यानुपरि°. ५ A चतुरर्णवोभूमणियायथात्वं for the line. ६ A om. from सर्वेषु up to विशेषाः in ४c. ७ C चो for सो. ८ B समर्थबलेन for समथबलेन. ९ A विपश्यनायकः; B विपश्यनायः for विपश्यनाय. १० A इमे विशेषाः for स निर्दिशीयति.

समाहितो[1] लभति अभिज्ञ पञ्च  N 80
क्षेत्रशतं[2] गच्छति धर्मदेशकः ।
नो चापि सो ऋद्धिबलात्तु हीयते
द्वितीयाय क्षान्तीय इमे विशेषाः ॥ १२ ॥
स तादृशं शान्त समाधिमेषते[3]  5
समाहितस्य न स अस्ति सत्त्वः ।
यस्तस्य चित्तस्य प्रमाणु गृह्णीया
द्वितीयाय क्षान्तीय इमे विशेषाः ॥ १३ ॥
ये लोकधातुष्विह केचि सत्त्वा-
स्ते बुद्धज्ञानेन भणेयु धर्मान् ।  10
उद्गृह्लतो[4] सर्व यतो हि भाषितं
द्वितीयाय क्षान्तीय इमे विशेषाः ॥ १४ ॥
पुरिमोत्तरा दक्षिणपश्चिमासु
हेष्ठे तथोर्ध्वं विदिशासु चैव ।
सर्वत्र सो पश्यति लोकनाथान्  15
तृतीयाय क्षान्तीय स निर्दिशीयति ॥ १५ ॥
सुवर्णवर्णेन समुच्छ्र्येण
अचिन्तियां निर्मित निर्मिणित्वा[5] ।
देशेति धर्मं बहुप्राणिकोटिनां  N 81
तृतीयाय क्षान्तीय इमे विशेषाः ॥ १६ ॥  20
य जम्बुद्वीप इह बुद्धक्षेत्रे
सर्वत्र सो दर्शयति[6] बोधिसत्त्वः ।
ज्ञातश्च भोती ससुरासुरे जगे
तृतीयाय क्षान्तीय इमे विशेषाः ॥ १७ ॥
बुद्धान आचारु तथैव गोचरा  25
ईर्यापथो यादृश नायकानाम् ।
सर्वत्र सो शिक्षितु भोति[7][8] पण्डितं-
स्तृतीयाय क्षान्तीय इमे विशेषाः ॥ १८ ॥
ये लोकधातुष्विह केचि सत्त्वा-
स्ते बोधिसत्त्वस्य भणेयु वर्णम् ।  30

---

१ B समाधितो for समाहितो. २ B क्षेत्रेशतां; C क्षेत्रःशताः for क्षेत्रशतं. ३ A समाधि सेवतः. ४ A उद्गृह्यते for उद्गृह्लतो. ५ C निर्मिहित्वा for निर्मिणित्वा. ६ A B पश्यति for दृश्यति. ७ A B T बोधिसत्त्वः for भोति पण्डितः. ८ After पण्डितः ( बोधिसत्त्वः ) B adds a line: ज्ञातश्च भोति ससुरासुरे जगे.

सचेऽस्य तस्मिन् नानुनीयते मनो
न शिक्षितो उच्यति बुद्धज्ञाने ॥ १९ ॥
ये लोकधातुष्विह केचि सत्त्वा-
स्ते बोधिसत्त्वस्य [1]भणेयु वर्णम् ।
(N 82) सचेऽस्य [2]तेषु [3]प्रतिहन्यते मनो
न शिक्षितोऽद्यापि स बुद्धज्ञाने ॥ २० ॥
[4]अर्थेन लब्धेन न भोति [5]सूमनो
न चाप्यनर्थेन स भोति दुर्मनाः ।
शैलोपमे चित्ति सदा प्रतिष्ठितो
अयं विशेषस्तृतीयाय क्षान्तियाः ॥ २१ ॥
घोषानुगामी इय क्षान्तिरुक्ता
चिन्तामयी भावनानुलोमिकी ।
[6]श्रुतंमया सा अनुत्पत्तिका या
शिक्षा च अत्राप्ययु बोधिमार्गः ॥ २२ ॥
तिस्रोऽपि क्षान्तीय सदा निरुत्तराः
स बोधिसत्त्वेन भवन्ति लब्धाः ।
दृष्ट्वा ततस्तं सुगता नरोत्तमा
वियाकरोन्ति विरजाय बोधये ॥ २३ ॥
[7]ततोऽस्य तं व्याकरणं श्रुणित्वा
प्रकम्पिता मेदिनी षड्विकारम् ।
(N 83) आभाय क्षेत्रं भवते प्रभास्वरं
पुष्पाणि च [8]वर्षिषु देवकोट्यः ॥ २४ ॥
तस्यो च तं व्याकरणं श्रुणित्वा
सत्त्वान कोटी नियुता अचिन्तिया ।
उत्पादयी चित्त वराग्रबोधये
वयं पि भेष्याम [9]जिने आर्यचेतिकाः ॥ २५ ॥
क्षान्त्या इमास्तिस्र निरुत्तरा यदा
[10]संबोधिसत्त्वेन भवन्ति लब्धाः ।
न चापि सो जायति नापि म्रीयते
न चापि स च्यवति [11]नोपपद्यते ॥ २६ ॥

---

१ B भणेय वर्णम्; C भणे अवर्णम् for भणेयु वर्णम्. २ A तत्र for तेषु. ३ C प्रतिमान्यते for °हन्यते. ४ C अनेन for अर्थेन. ५ A B सुमना. ६ B श्रुतमयी for श्रुतंमया. ७ C ततोऽपि for ततोऽस्य; C reads st. 25 before st. 24. ८ C वर्षंति पुष्पवर्षम् for वर्षिषु देवकोट्यः. ९ A B जिनाग्रचेतिका for जिन आर्यचेतिकाः. १० A B सबोधि° for संबोधि°. ११ A B नु चोपपद्यते.

यदा इमा क्षान्ति त्रयो निरुत्तरा
　संबोधि[१]सत्त्वेन भवन्ति लब्धाः ।
न पश्यते जायति यश्च म्रीयते
　स्थितधर्मतां पश्यति सर्वधर्मान् ॥ २७ ॥
तथाहि तेनो वितथेति ज्ञाता　　5
　मायोपमा धर्म स्वभावशून्याः ।
न[३] शून्यता जायति नो च म्रीयते　　N 84
　स्वभावशून्या इ[४]मि सर्वधर्माः ॥ २८ ॥
यदात्यसौ सत्कृतु भोति केनचिद्
　उपस्थितो मानितु पू[५]जितोऽर्चितः ।　　10
न तस्य तस्मिन्ननुनीयते मनो
　जानाति सो धर्मस्वभावशून्यताम् ॥ २९ ॥
आक्रुष्ट सत्त्वेहि प्रहारतर्जितो
　न तेषु क्रोधं कुरुते न मानम् ।
मैत्रीं च तेषु दृढ संजनेति　　15
　तथैव सत्त्वान प्रमोचनाय ॥ ३० ॥
लोष्टेहि दण्डेहि च ताड्यमानः
　प्रतिघातु तेषु न करोति पण्डितः ।
नैरात्म्यक्षान्तीय प्रतिष्ठितस्य
　न विद्यते क्रोधखिलं न मानः ॥ ३१ ॥　　20
त[६]थाहि तेनो वितथेति ज्ञाता
　मायोपमा ध[७]र्म स्वभावशून्याः ।
स तादृशे धर्मनये प्रतिष्ठितः
　सुसत्कृतो भोति सदेवलोके ॥ ३२ ॥
यदापि सत्त्वाः प्रगृहीतशस्त्रा-　　25　N 85
　श्छिन्देयु तस्यो पृथु अङ्गमङ्गम् ।
न तस्य तेषु प्रतिहन्यते मनो
　न चापि मैत्री करुणा तु हीयते ॥ ३३ ॥
एवं च सो तत्र जनेति चित्तं
　छिन्दन्ति ते हि पृथु [८]अङ्गमङ्गम् ।　　30

---

१ C ते बोधि° for संबोधि°. २ C ज्ञानस्वभावु शून्यता for धर्मस्वभावशून्यताम्. ३ A B T न शून्यतां पश्यति for न शून्यता जायति. ४ A B इति for इमि. ५ B पूजितोऽपि for °पूजितोऽर्चितः. ६ B तथा च for तथाहि. ७ A सर्व for धर्म. ८ C अङ्गमङ्ग.

तथा[1] न मह्यं शिवं[2] शान्ति निर्वृती
यावन्न स्थाप्ये इमि अग्रबोधये ॥ ३४ ॥
एतादृशे क्षान्तिबले निरुत्तरे
नैरात्म्यक्षान्तीसमताविहारिणाम् ।
5 संबोधिसत्त्वान महायशानां
कल्पान कोट्यः सततं सुभाविताः[3] ॥ ३५ ॥
N 86 ततोत्तरे यात्तिक गङ्गवालिका[4]
न ताव बोधी भवतीह स्पर्शिता ।
ये बुद्धज्ञानेन न[5] करोति कार्यं
10 किं वा पुनर्ज्ञान तथागतानाम् ॥ ३६ ॥
क्षपेतु वर्ण सुकरं न तेषां
प्रभाषता कल्पशतान्यचिन्तिया ।
अनन्तकीर्तेन महायशानां
नैरात्म्यक्षान्तीय प्रतिष्ठितानाम् ॥ ३७ ॥
15 तस्माद्धि यो इच्छति बोधि बुद्धितुं[6]
तं ज्ञानस्कन्धं प्रवरं निरुत्तरम् ।
स क्षान्ति भावेतु जिनेन वर्णितां
न दुर्लभा बोधि वरा भविष्यति ॥ ३८ ॥

इति श्रीसमाधिराजे[7] त्रिक्षान्त्यवतारपरिवर्तो नाम[8] सप्तमः ॥ ७ ॥

१ A B माता for तथा. २ B सिय शान्त for शिव शान्ति. ३ B सुभाषिता for सुभाविताः. ४ A गङ्गवाङ्का. ५ AB om न. ६ BC बुध्यते. ७ B om. इति श्रीसमाधिराजे. ८ A om. नाम.

## ८

## *अभावसमुद्गतपरिवर्तः ।

तत्र[1] पुनरपि भगवान् चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म[2]—भूतपूर्वं कुमार अतीतेऽध्वनि N 87
असंख्येयैः[3] कल्पैरसंख्येयतरैर्विपुलैरप्रमेयैरचिन्त्यैरपरिमाणैर्यदासीत् । तेन कालेन तेन समयेन N 88
अभावसमुद्गतो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोके उदपादि विद्याचरणसंपन्नः सुगतो
लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवानां च मनुष्याणां च बुद्धो भगवान् । तत् किं मन्यसे
कुमार केन कारणेन स तथागतोऽभावसमुद्गत इत्युच्यते ? स खलु पुनः कुमार तथागतो 5
जातमात्र एवोपर्यन्तरीक्षे सप्ततालमात्रं वैहायसमभ्युद्गम्य सप्त पदानि प्रक्रमित्वा इमामेवंरूपां
वाचमभाषत—अभावसमुद्गताः सर्वधर्माः, अभावसमुद्गताः सर्वधर्मा इति । तेन च कुमार शब्देन
त्रिसाहस्रमहासाहस्रो लोकधातुः स्वरेणाभिविज्ञप्तोऽभूत् । तत्र भौमान् देवानुपादाय यावद् ब्रह्मलोकं
परंपरया शब्दमुदीरयामासुः[4] घोषमनुश्रावयामासुः—अभावसमुद्गतो बतायं तथागतो भविष्यति,
यो जातमात्र एवोपर्यन्तरीक्षे सप्ततालमात्रमभ्युद्गम्य सप्त पदानि प्रक्रमित्वा[5] अभावशब्दमुदीरयति[6] । 10
इति ह्यभावसमुद्गतोऽभावसमुद्गत इति तस्य[7] तथागतस्य नामधेयमुदपादि । तस्य च भगवतो
बोधिप्राप्तस्य सर्ववृक्षपत्रेभ्यः सर्वतृणगुल्मौषधिवनस्पतिभ्यः सर्वशैल[8]शिखरेभ्यश्चाभावसमुद्गतशब्दो
निश्चरति[9] । यावति च तत्र लोकधातौ शब्दप्रज्ञप्तिः सर्वतोऽभावसमुद्गतविज्ञप्तिशब्दो निश्चरति । N 89
तेन च कुमार कालेन तेन समयेन तस्य भगवतोऽभावसमुद्गतस्य तथागतस्यार्हतः सम्यक्सं-
बुद्धस्य प्रवचने महाकरुणाचिन्ती नाम राजकुमारोऽभूदभिरूपः प्रासादिको दर्शनीयः 15
परमं[10]शुभवर्णपुष्कलतया समन्वागतः । अथ खलु कुमार स महाकरुणाचिन्ती नाम राजकुमारो येन
भगवान् अभावसमुद्गतस्तथागतोऽर्हन् सम्यक्संबुद्धस्तेनोपसंक्रामत् । उपसंक्रम्य तस्य भगवतः
पादौ शिरसाभिवन्द्य भगवन्तं त्रिः प्रदक्षिणीकृत्य एकान्तेऽस्थात् ॥

अथ खलु कुमार स भगवान् अभावसमुद्गतस्तथागतोऽर्हन् सम्यक्संबुद्धो महाकरुणा-
चिन्तिनो राजकुमारस्याध्याशयं विदित्वा [11]इमं समाधिं देशयामास । अथ खलु कुमार स 20
महाकरुणाचिन्ती राजकुमारः इमं समाधिं श्रुत्वा तुष्ट[12] उदग्र आत्तमनाः प्रमुदितः प्रीति-
सौमनस्यजातः प्रसीदति स्म । प्रसन्नचित्तश्च केशश्मश्रूण्यवतार्य काषायाणि वस्त्राणि परिधाय
सम्यगेव श्रद्धया अगारादनगारिकां प्रव्रजितोऽभूत्[13] । स प्रव्रजितः सन्निमं समाधिमुद्गृहीतवान्[14] । N 90
उद्गृह्य पर्यवाप्य धारयित्वा वाचयित्वा भावनायोगमनुयुक्तो व्यहार्षीत् । स तेनैव कुशलमूलेन

---

* This chapter is edited by Régamey, Warsaw, 1939.

१ C तत्र खलु भगवान् पुनरेव for तत्र पुनरपि भगवान्. २ After स्म, ABT read a passage given in App. I (No. 7). ३ C असंख्येयतरे विपुलेऽप्रमेयेऽचिन्त्येऽपरिपाणे for असंख्येयै ... माणैः. ४ B उदानयामासुः for उदीरयामासुः. ५ C प्रक्रम्य for प्रक्रमित्वा. ६ B °दीरयन् for °दीरयति. ७ C om. तस्य तथागतस्य. ८ C पर्वतेभ्यः for °शैलशिखरेभ्यः. ९ B निःसरति for निश्चरति. १० A B om. परम...गतः. ११ After इमं, C adds: सर्वधर्मस्वभाव˙˙˙काशयति स्म. १२ A B om. तुष्ट...जातः. १३ A B om. अभूत्. १४ C उद्गृह्णाति धारयति वाचयति पर्यवाप्नोति भावनायोगमनुयुक्तश्च विहरति for उद्गृहीतवान् ...व्यहार्षीत्.

विंशतिकल्पकोट्यो न जातु दुर्गतिविनिपातमगमत् । विंशतीनां कल्पानामत्ययेन अनुत्तरां सम्यक्संबोधिमभिसंबुद्धोऽभूत् । सुविचिन्तितार्थो नाम तथागतोऽर्हन् सम्यक्संबुद्धो लोक उदपादि । सर्वेषु च तेषु कल्पेषु विंशतिं च बुद्धकोटीरारागयामास[2] । पश्य कुमार यथायं समाधिर्बहुकरो बोधिसत्त्वानां महासत्त्वानामनुत्तरस्य बुद्धज्ञानस्य परिपूरणाय संवर्तते ॥

N 91 5 अथ खलु भगवांस्तस्यां वेलायामिमा[3] गाथा अभाषत—

स्मराम्यहं पूर्वमतीतमध्वनि
अचिन्तिये कल्पि नराणमुत्तमः[4] ।
उत्पन्नु लोकार्थकरो महर्षि-
र्नाम्ना हि सोऽभावसमुद्गतोऽभूत् ॥ १ ॥

10 स जातमात्रो गगने स्थिहित्वा
सर्वेष धर्माण अभावु देशयी ।
तदानुरूपं कृतु नामधेयं
शब्देन सर्वं त्रिसहस्र विज्ञपी ॥ २ ॥

देवापि सर्वे प्रमुमोच शब्दं
15 अभावु नाम्नेति जिनो भविष्यति ।
यो जातमात्रः पद सप्त प्रक्रम-
न्नभावु धर्माण ब्रवीति नायकः ॥ ३ ॥

बुद्धो यदा भेष्यति धर्मराजः
सर्वेष धर्माण प्रकाशको मुनिः ।
20 तृणवृक्षगुल्मौषधिशैलपर्वते
अभावु धर्माण रवो भविष्यति ॥ ४ ॥

N 92 यावन्ति शब्दास्तहि लोकधातौ
सर्वे ह्यभावा न हि कश्चि भावः ।
तावन्ति खो तस्य तथागतस्य
25 स्वरु निश्चरी लोकविनायकस्य ॥ ५ ॥

तस्मिंश्च काले अभु राजपुत्रः
करुणाविचिन्ती सद नामधेयः ।
अभिरूप प्रासादिक दर्शनीय
उपागमी तस्य जिनस्य अन्तिकम्[5] ॥ ६ ॥

---

१ A B T om. from विंशतीनां up to कल्पेषु. २ After आरागयामास, ABT read a passage given in App. I. (No. 8). ३ After वेलायाम्, ABT read भूयस्या मात्रया एतमेव पूर्वयोगपरिवर्तं चन्द्रप्रभस्य कुमारभूतस्य विस्तरेण गाथाभिगीतेन संप्रकाशयति स्म for इमा गाथा अभाषत. ४ C °मुत्तमम् for °मुत्तमः. ५ C अन्तिके.

वन्दित्व पादौ मुनिपुंगवस्य
प्रदक्षिणं कृत्य च गौरवेण ।
प्रसन्नचित्तो[1] निषसाद तत्र
श्रवणाय धर्मं विरजमनुत्तरम् ॥ ७ ॥
स चो जिनो आशयु ज्ञात्व धीरः  5
प्रकाशयामास समाधिमेतम् ।
श्रुत्वा च सो इमु विरजं समाधिं
लघु प्रव्रजी जिनवरशासनेऽस्मिन्[2] ॥ ८ ॥
स प्रव्रजित्वान इमं समाधिं  N 93
धारित्व वाचित्व पर्यापुणित्वा ।  10
कल्पान कोट्यः परिपूर्ण विंशतिं
न जातु गच्छे[1] विनिपातभूमिम् ॥ ९ ॥
स तेन चैवं कुशलेन कर्मणा
आरागयी विंशति बुद्धकोट्यः ।
तेषां च सर्वेषु जिनान अन्तिका-[2]  15
दिमं वरं शान्त समाधि भावयी ॥ १० ॥
स पश्चिकाले अमु बुद्ध लोके
सुचिन्तितार्थो सदनामधेयः ।
कृत्वा च अर्थं बहुप्राणकोटिनां
स पश्चकालस्मि शिखीव निर्वृतः ॥ ११ ॥  20
तस्माद्धि[4] य इच्छति बोधि बुद्धितुं
सत्त्वांश्च उत्तारयितुं भवार्णवात् ।
धारेत सूत्रमिमु बुद्धवर्णितं
न दुर्लभा भेष्यति सोऽग्रबोधिः ॥ १२ ॥
इति श्री समाधिराजे अभावसमुद्गतपरिवर्तो नामाष्टमः ॥ ८ ॥  25

---

१ C प्रशान्तचित्तो. २ B शासनस्मिन्. १ A C जग्मुः for गच्छे. २ C अन्तिके अयं. ४ A B T read st. 12 in the next chapter in the add. passage is App. I. No. ( 8 ).

## गम्भीरधर्मक्षान्तिपरिवर्तः ।

N 94 तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म–तस्मात्तर्हि कुमार[1] बोधिसत्त्वेन
महासत्त्वेनेमं समाधिमाकाङ्क्षता क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन गम्भीरधर्मक्षान्ति-
कुशलेन भवितव्यम् । कथं च कुमार[2] बोधिसत्त्वो महासत्त्वो गम्भीरधर्मक्षान्ति[3]कुशलो भवति ?
इह कुमार बोधिसत्त्वेन महासत्त्वेन मायोपमाः सर्वधर्मा यथाभूततः प्रज्ञातव्याः । स्वप्नोपमा
5 मरीच्युपमाः प्रतिश्रुत्कोपमाः प्रतिभासोपमा उदकचन्द्रोपमा निर्मितोपमाः प्रतिबिम्बोपमा आकाशोपमाः
N 95 सर्वधर्माः प्रज्ञातव्याः[4] । यदा च कुमार बोधिसत्त्वेन महासत्त्वेन मायोपमाः सर्वधर्माः परिज्ञाता
भवन्ति, स्वप्नोपमा मरीच्युपमाः प्रतिश्रुत्कोपमाः प्रतिभासोपमा उदकचन्द्रोपमा निर्मितोपमाः
प्रतिबिम्बोपमा आकाशोपमाः सर्वधर्माः[5] परिज्ञाता भवन्ति यथाभूततः, तदायं कुमार बोधिसत्त्वो
महासत्त्वो गम्भीरधर्मक्षान्तिकुशल इत्युच्यते । स गम्भीरया धर्म[6]क्षान्त्या समन्वागतो रञ्जनीयेषु
10 धर्मेषु न रज्यते, दोषणीयेषु धर्मेषु न दुष्यते[7], मोहनीयेषु धर्मेषु न मुह्यते । तत् कस्य हेतोः ?
तथा हि–स तं धर्मं न समनुपश्यति, तं धर्मं नोपलभते । यो रज्येत, यत्र वा रज्येत, येन वा
रज्येत । यो दुष्येत, यत्र वा दुष्येत, येन वा दुष्येत । यो मुह्येत, यत्र वा मुह्येत, येन वा
मुह्येत । स तं धर्मं न समनुपश्यति, तं धर्म नोपलभते । तं धर्ममसमनुपश्यन्ननुपलभमानोऽ-
रक्तोऽदुष्टोऽमूढोऽविपर्यस्तचित्तः समाहित इत्युच्यते । निष्प्रपञ्चः[8] .... । तीर्णः पारगतः.... ।
15 स्थलगतः.... । क्षेमप्राप्तः । अरूपप्राप्तः[9] । शीलवान् । ज्ञानवान् । प्रज्ञावान् । पुण्यवान् ।
N 96 ऋद्धिमान् .... । स्मृतिमान् .... । मतिमान् .... । गतिमान् .... । ह्रीमान् .... । धृतिमान् ।
चारित्रवान । धूतगुणसंलेखवान् । अनङ्गनः । निष्किंचनः । अर्हन् । क्षीणास्रवः । निष्क्लेशो
वशीभूतः सुविमुक्तचित्तः सुविमुक्तप्रज्ञः आजानेयो महानागः कृतकृत्यः कृतकरणीयोऽपहृतभारोऽ-
नुप्राप्तस्वकार्थः परिक्षीणभवसंयोजनः सम्यगाज्ञासुविमुक्तचित्तः सर्वचेतोवशिपरमपारमिताप्राप्तः
श्रमणः । ब्राह्मणः स्नातकः । पारगः वेदकः श्रोत्रियः । बुद्धपुत्रः । शाक्यपुत्रः । मर्दितकण्टकः ।
20 उत्क्षिप्तपरिखः[10] । उदीर्णपरिखः । आक्षिप्तशल्यः । निर्जरः । भिक्षुः । अपरिवेष्टनः[11] । पुरुषः ।
सत्पुरुषः । उत्तमपुरुषः । महापुरुषः । पुरुषसिंहः । पुरुषनागः[12] । पुरुषाजानेयः । पुरुषधौरेयः
पुरुषशूरः । पुरुषवीरः । पुरुषपुष्पः । पुरुषपद्मः । पुरुषपुण्डरीकः । पुरुषदमकः । पुरुषचन्द्रः ।
N 97 अकापुरुषः । पुरुषा[13]नुपलिप्तः इत्युच्यते । अथ खलु भगवां[14]स्तस्यां वेलायमिमा गाथा अभाषत–

यद लोकधातु न विवर्त[15] भोति
आकाशु भोति अयु सर्वलोकः ।

---

१ After कुमार, A B read a passage given in App. I ( No. 9 ). T does not translate it. २ B om. कुमार. ३ C om. °क्षान्ति°. ४ C प्रत्यवेक्षितव्याः for प्रज्ञातव्याः. ५ After सर्वधर्माः, C adds यथाभूतं प्रत्यवेक्षिता भवन्ति. ६ C om. धर्म°. ७ B दूष्यते throughout. ८ The dots stand for the expression इत्युच्यते; A om. निष्प्रपञ्च. ९ B om. अरूपप्राप्तः. १० C उत्क्षिप्तपरिधि ... तीर्णपरिधि for °परिख. ११ A अनवधानवेष्टनः; B अपर्यवदान°; C अनवसान.° १२ C पुरुषदान्त for °नाग. १३ B om. पुरुष°. १४ AB °वानिममेव गम्भीरधर्मक्षान्त्यवतारं धर्मपर्यायमुद्भावयन्निमा गाथा अभाषत. १५ A विवर्ण for विवर्त.

यथैव तं पूर्वु तथैव पश्चात्
तथोपमान् जानथ सर्वधर्मान् ॥ १ ॥
इदं जगद् याव[1] च किंचि वर्तते
अधस्तमेति अभूदापस्कन्धः।
यथैव तं हेष्ठे तथैव ऊर्ध्वे
तथोपमान् जानथ सर्वधर्मान् ॥ २ ॥
यथान्तरीक्षस्मि न किंचिदभ्रं
क्षणेन चो[2] दृश्यति अभ्रमण्डलम्।
पूर्वान्तु जानीय कुतः प्रसूतं
तथोपमान् जानथ सर्वधर्मान् ॥ ३ ॥
तथागतस्यो यथ[3] निर्वृतस्य
मनसि करोन्तः प्रतिबिम्बु दृश्यते।
यथैव तं पूर्वु तथैव पश्चात्
तथोपमान् जानथ सर्वधर्मान् ॥ ४ ॥
यथैव फेनस्य महान्तु पिण्ड-
मोघेन[4] उच्छेत्तु नरो निरीक्षते।
निरीक्ष्य सो तत्र न सारसंदर्शी
तथोपमान् जानथ सर्वधर्मान् ॥ ५ ॥
देवे यथा वर्षति स्थूलबिन्दुके[5]
पृथक् पृथग् बुद्बुद संभवन्ति।
उत्पन्नभग्ना न हि सन्ति बुद्बुदा-
स्तथोपमान् जानथ सर्वधर्मान् ॥ ६ ॥
यथैव[6] ग्रामान्तरि लेखदर्शनात्
क्रियाः प्रवर्तन्ति[7] पृथक् शुभाशुभाः।
न लेखसंक्रान्ति गिराय विद्यते
तथोपमान् जानथ सर्वधर्मान् ॥ ७ ॥
यथा नरो मानमदेन[8] मोहितो
भ्रमन्ति संजानतिमां वसुंधराम्।
न चो महीया चलितं न कम्पितं
तथोपमान् जानथ सर्वधर्मान् ॥ ८ ॥

१ A यावत; B यावदन्त for याव च. २ B चोदघस्यति for चो दृश्यति. ३ A B परिनिर्वृतस्य for यथ नि°. ४ A जाब्येन उद्गृहीतु for ओघेन उच्छेत्तु. ५ AB °बिन्दुकं for °बिन्दुके. ६ C यथापि for यथैव. ७ C प्रकुर्वन्ति for प्रवर्तन्ति. ८ A B पानमदेन.

आदर्शपृष्ठे तथ तैलपात्रे
निरीक्षते नारि[1] मुखं स्वलंकृतम्।
सा तत्र रागं जनयित्व बालों[2]
प्रधाविता काम गवेषमाणा ॥ ९ ॥

5 मुखस्य संक्रान्ति यदा न विद्यते
बिम्बे मुखं नैव कदाचि लभ्यते।
यथा स मूढा जनयेत रागं
तथोपमान् जानथ सर्वधर्मान् ॥ १० ॥

यथैव गन्धर्वपुरं मरीचिका
10 यथैव माया सुपिनं यथैव।
N 100 स्वभावशून्या तु निमित्तभावना
तथोपमान् जानथ सर्वधर्मान् ॥ ११ ॥

यथैव चन्द्रस्य नभे विशुद्धे
ह्रदे प्रसन्ने[3] प्रतिबिम्ब दृश्यते।
15 शशिस्य संक्रान्ति जले न विद्यते
तल्लक्षणान्[4] जानथ सर्वधर्मान् ॥ १२ ॥

यथा नरः शैलवनान्तरे स्थितो
भणेय्य गायेय्य हसेय्य रोदये।
प्रतिश्रुत्का श्रूयति नो च दृश्यते
20 तथोपमान् जानथ सर्वधर्मान् ॥ १३ ॥

गीते च वाद्ये च तथैव रोदिते
प्रतिश्रुत्का जायति तं प्रतीत्य।
गिराय घोषो न कदाचि विद्यते
तथोपमान् जानथ सर्वधर्मान् ॥ १४ ॥

25 यथैव कामान् सुपिनन्त सेविय
प्रतिबुद्धसत्त्वः[5] पुरुषो न पश्यति।
स बाल कामेष्वतिकामलोभी[6]
तथोपमान् जानथ सर्वधर्मान् ॥ १५ ॥

N 101 रूपान्[7] यथा निर्मिणि मायकारो
30 हस्तीरथानश्वरथान् विचित्रान्।

---

१ C नारि अलंकृत मुखम्. २ A बालः प्रधावितः for बाला प्रधाविता. ३ C विशुद्धे for प्रसन्ने. ४ C तल्लक्षणं. ५ A B प्रतिबुद्धवन्तः for °बुद्धसत्त्वः. ६ B कामयति कामलोभी for कामेष्वतिकामलोभी. ७ B रूपाण्यथो for रूपान् यथा.

न चात्र कश्चिद् रथ तत्र दृश्यते
　　तथोपमान् जानथ सर्वधर्मान् ॥ १६ ॥
यथा कुमारी सुपिनान्तरस्मिन्
　　सो[1] पुत्र जातं च मृतं च पश्यति ।
जातेऽतितुष्टा मृते दौर्मनःस्थिता　　5
　　तथोपमान् जानथ सर्वधर्मान् ॥ १७ ॥
यथा मृतां मातरमात्मजं वा
　　स्वप्ने तु वै रोदिति उच्चैशब्दम्[2] ।
न तस्य माता म्रियते न पुत्र-
　　स्तथोपमान् जानथ सर्वधर्मान् ॥ १८ ॥　　10
यथैव रात्रौ जल चन्द्र दृश्यते
　　अच्छस्मि वारिस्मि अनाविलस्मि ।
अग्राह्य तुच्छो जल चन्द्रशून्य
　　तथोपमान् जानथ सर्वधर्मान् ॥ १९ ॥
यथैव[3] ग्रीष्माण मध्याह्नकाले　　15
　　तृषाभितप्तः पुरुषो व्रजेत ।
मरीचिकां पश्यति तोयराशिं
　　तथोपमान् जानथ सर्वधर्मान् ॥ २० ॥
मरीचिकायामुदकं न विद्यते　　N 102
　　स मूढ सत्त्वः पिवितुं तदिच्छति ।　　20
अभूतवारिं पिवितुं न शक्यते[4]
　　तथोपमान् जानथ सर्वधर्मान् ॥ २१ ॥
यथैव आर्द्रं कदलीय स्कन्धं
　　सारार्थिकः पुरुषु विपाटयेत ।
वहिर्वा अध्यात्म न सारमस्ति　　25
　　तथोपमान् जानथ सर्वधर्मान् ॥ २२ ॥
न चक्षुः प्रमाणं न श्रोत्रं[1] घ्राणं
　　न जिह्व प्रमाणं न कायचित्तम् ।
प्रमाण यद्येत भवेयुरिन्द्रिया
　　कस्यार्यमार्गेण भवेत कार्यम् ॥ २३ ॥　　30

---

१ B स्वपुत्र for सा पुत्र. २ B उच्चशब्दा. ३ C यथापि for यथैव. ४ B C शक्यं for शक्यते.
१ C चक्षु for श्रोत्र.

यस्मादिमे इन्द्रिय अप्रमाणा
जडा[1]: स्वभावेन अव्याकृताश्च ।
तस्माद् य निर्वाणपथैव अर्थिकः
स आर्यमार्गेण करोतु कार्यम् ॥ २४ ॥

पूर्वान्तु[2] कायस्य अवेक्षमाणो
नैवात्र कायो नपि कायसंज्ञा ।
N 103 न यत्र कायो नपि कायसंज्ञा
असंस्कृतं गोत्रमिदं प्रवुच्यति ॥ २५ ॥

निर्वृत्ति[3] धर्माण न अस्ति धर्मा
10 येनेति नास्ति न ते जातु अस्ति ।
अस्तीति नास्तीति च कल्पनावता-
मेवं चरन्तान न दुःख शाम्यति ॥ २६ ॥

अस्तीति नास्तीति उभेऽपि अन्ता
शुद्धी अशुद्धीति इमेऽपि अन्ता[4] ।
15 तस्मादुभे अन्त विवर्जयित्वा
मध्येऽपि स्थानं न करोति पण्डितः ॥ २७ ॥

अस्तीति नास्तीति विवाद एष
शुद्धी अशुद्धीति अयं विवादः ।
विवादप्राप्तान न दुःख शाम्यति
20 अविवादप्राप्तान दुखं[5] निरुध्यते ॥ २८ ॥

स्मृतेरुपस्थानकथां कथित्वा
मन्यन्ति बाला वय कायसाक्षी ।
N 104 न कायसाक्षिस्य च अस्ति मन्यना
प्रहीण तस्यो पृथु सर्व मन्यना ॥ २९ ॥

25 चतुर्षु ध्यानेषु कथां कथित्वा
वदन्ति बाला वयं ध्यानगोचराः ।
न क्लेशध्यायि न च अस्ति मन्यना
विदित्व ज्ञानेन मदः प्रहीयते ॥ ३० ॥

चतुर्षु सत्त्वेषु[6] कथां कथित्वा
30 वदन्ति बाला वय सत्यदर्शिनः ।

---

१ C जनाः for जडाः. २ B पूर्वादिकार्ये च अवेक्षमाणे for the line. ३ A निवृत्त; B C निर्वृत्ति. ४ C मुक्ता for अन्ता. ५ C दुःखं न शाम्यते. ६ C वाक्येषु for सत्त्वेषु.

न सत्यदर्शिस्य च काचि मन्यना
अमन्यना सत्य जिनेन देशिता ॥ ३१ ॥
रक्षेत शीलं न च तेन मन्ये
श्रुणेय्य धर्म[1] न च तेन मन्ये ।
येनैव सो मन्यति अल्पप्रज्ञो 5
तन्मूलकं दुःख विवर्धतेऽस्य ॥ ३२ ॥
दुःखस्य मूलं मदु संनिदर्शितं
सर्वज्ञिना लोकविनायकेन ।
मदेन मत्तान दुःखं प्रवर्धते[2]
अमन्यमानान दुखं निरुध्यते ॥ ३३ ॥ 10
कियद्बहून् धर्म पर्यापुणेय्या N 105
शीलं[3] न रक्षेत श्रुतेन मत्तः ।
न बाहुश्रुत्येन स शक्यु तायितुं
दुःशील येन व्रजमान दुर्गतिम् ॥ ३४ ॥
सचेत् पुनः शीलमदेन मत्तो 15
न बाहुश्रुत्यस्मि करोति योगम् ।
क्षयेत्व[4] सो शीलफलमशेषं
पुनोऽपि स प्रत्यनुभोति दुःखम् ॥ ३५ ॥
किंचापि भावेय्य समाधि लोके
न चो विभावेय्य स आत्मसंज्ञाम् । 20
पुनः प्रकुप्यन्ति क्लिेशु तस्य
यथोद्रकस्येह समाधिभावना ॥ ३६ ॥
नैरात्म्यधर्मान्[5] यदि प्रत्यवेक्षते
तान् प्रत्यवेक्ष्य यदि भावयेत ।
स हेतु निर्वाणफलस्य प्राप्तये 25
यो अन्यहेतुर्न स भोति शान्तये ॥ ३७ ॥
यथा नरश्चौरगणैरुपद्रुतः N 106
पलायितुमिच्छति जीवितार्थिकः ।
न तस्य पादाः प्रभवन्ति गच्छितुं
गृहीत्व चौरेहि स तत्र हन्यते ॥ ३८ ॥ 30

---

१ A शून्येष्वधर्म for श्रुणेय्य धर्म. २ C विवर्धते for प्रवर्धते. ३ After शीलं, B repeats st. ३३ and ३४*a*. ४ C क्षमेत्व for क्षयेत्व. ५ B निरात्मधर्मान् for नैरात्म्य°.

एवं नरः शीलविहीन मूढः
पलायितुमिच्छति संस्कृतातः ।
स शीलहीनो न प्रभोति गच्छितुं
जराय व्याध्या मरणेन हन्यते ॥ ३९ ॥

यथैव चौराण बहू[1] सहस्रो
नानामुखेहि प्रकरोति पापम् ।
एवं किलेशा विविधैर्मुखेभि-
र्यथैव चौरो हनि शुक्ल[2]पाक्षम् ॥ ४० ॥

येन सुनिध्याप्तु निरात्मस्कन्धा
आक्रुष्टु परिभा[3]ष्टु न शङ्कु भोति ।
(N 107) स[4] क्लेशमारस्य वशं न गच्छते
यः शून्यतां जानति सो न कुप्यते ॥ ४१ ॥

बहू जनो भाषति स्कन्धशून्यतां
न च प्रजा[5]नाति यथा निरात्मकाः ।
ते अप्रजानन्त परेहि चोदिताः
क्रोधाभिभूताः परुषं वदन्ति ॥ ४२ ॥

यथा नरो आतुरु कायदुःखितो
बहूहि वर्षेहि न जातु मुच्यते ।
स दीर्घगैलान्यदुखेन पीडितः
पर्येषते वैद्यु चिकित्सनार्थिकः ॥ ४३ ॥

पुनः पुनस्तेन गवेषता च
आसादितो वैद्य विदू विचक्षणः ।
कारुण्यतां तेन उपस्थ[6]पेत्वा
प्रयुक्तु भैषज्यमिदं निषेव्यताम् ॥ ४४ ॥

गृहीत्व भैषज्य पृथुं[7] वरां वरां
न सेवते आतुरु येन मुच्यते ।
न वैद्यदोषो न च भैषजानां
तस्यैव दोषो भवि आतुरस्य ॥ ४५ ॥

(N 108) एवमिह शासनि प्रव्रजित्वा
पर्यापुणित्वा बल ध्यान इन्द्रियान्[8] ।
न भावनायामभियुक्त भोन्ति
अयुक्तयोगीन कुतोऽस्ति निर्वृतिः[9] ॥ ४६ ॥

---

१ A बहूसहस्रा. २ A शुक्लपक्षम्. ३ A परिद्रष्टु. for °भाष्टु. ४ A संक्लेश°; C अक्लेश° for स क्लेश°. ५ A B प्रजानन्ति for प्रजानाति. ६ B उपस्थयित्वा. ७ B पृथु वराणां for पृथुं वरां वरां. ८ B इन्द्रियाः. ९ A B निर्वृतः.

स्वभावशून्याः सद सर्वधर्मा
　　वस्तुं विभावेन्ति जिनान पुत्राः ।
सर्वेण सर्वं भव सर्वशून्यं
　　प्रादेशिकी शून्यता तीर्थिकानाम् ॥ ४७ ॥
न विज्ञ बालेहि करोन्ति विग्रहं　　5
　　सत्कृत्य बालान् परिवर्जयन्ति ।
ममान्तिके एन्ति प्रदुष्टचित्ता
　　न बालधर्मेहि करोति संस्तवम् ॥ ४८ ॥
न विज्ञ बालान करोति सेवनां
　　विदित्व बालान स्वभावसंततिम् ।　　10
कियच्चिरं बालु सुसेवितोऽपि
　　पुनो[1]ऽपि ते भोन्ति अमित्रसंनिभाः ॥ ४९ ॥
न विज्ञ बालेष्विह विश्वसन्ति
　　विज्ञाय बालान स्वभावधर्मताम् ।
स्वभावभिन्न प्रकृतीय बाला　　15　　N 109
　　न चास्ति मित्रं हि पृथग्जनानाम् ॥ ५० ॥
सहधर्मि[2]केनो वचनेन उक्ताः
　　क्रोधं च दोषं[3] च अप्रत्ययं च ।
प्राविष्करोन्ति इमि बालधर्मान्
　　इममर्थु विज्ञाय न विश्वसन्ति ॥ ५१ ॥　　20
बाला हि बालेहि समं समेन्ति
　　यथा अमेध्येन अमेध्यु सार्धम् ।
विज्ञाः पुनर्विज्ञजनेन सार्धं
　　समेन्ति सर्पिर्यथ सर्पि[4]मण्डैः ॥ ५२ ॥
संसा[5]रदोषाण अप्रत्यवेक्षणात्　　25
　　कर्माण विपा[6]कमनोतरन्तः ।
बुद्धान चो वाक्यमश्रद्दधाना-
　　स्ते च्छेदभेदस्मि चरन्ति बालाः ॥ ५३ ॥
सुदुर्लभं लभ्य मनुष्यलाभं
　　न शिल्पस्थानेषु भवन्ति कोविदाः ।　　30

---

१ C पुरतो हि ते for पुनोऽपि ते. २ B सहधर्मि तेनो वचनेन उक्तः for the line. ३ A रोषं or दोषं. ४ B सर्पिमण्डे. ५ B संस्कारदोषाण for संसार°. ६ A विपाकुमनोचरन्तः.

N 110 दरिद्रभूतान धनं न विद्यते
अजीवमानास्[1]तद प्रव्रजन्ति ॥ ५४ ॥

ते प्रव्रजित्वा इह बुद्धशासने
अध्[2]युषिता भोन्तिह पात्रचीवरे ।
5 ते पाप[3]मित्रेहि परिगृहीता-
स्तां नाचरन्ते सुगतान शिक्षाम् ॥ ५५ ॥

ते आत्मनः शीलमपश्यमाना-
श्चित्[4]तव्यवस्थां न लभन्ति बालाः ।
रात्रिंदिवं भोन्ति अयुक्तयोगा
10 न ते जुगुप्सन्ति च पाप[5]कर्मतः ॥ ५६ ॥

[6]कायेन चित्तेन असंयतानां
न किंचि वाचाय स[7] जल्पितव्यम् ।
सदा गवेषन्ति परस्य दो[8]षान्
अपराद्ध किं केन वा चोदयिष्ये ॥ ५७ ॥

आहारि अध्युषित भोन्ति बाला
15 न चास्ति मात्र[9]ज्ञतु भोजनस्मिन् ।
N 111 बुद्धस्य पुण्येहि लभित्व भोजनं
तस्यैव बाला अकृतज्ञ भोन्ति ॥ ५८ ॥

ते[10] भोजनं स्वादुरसं प्रणीतं
20 ल[11]ब्ध्वा च भुञ्जन्ति अयुक्तयोगाः ।
तेषां स आहारु वधाय भोति
यथ हस्तिपोतान बि[12]सा अधौतकाः ॥ ५९ ॥

किं चापि विद्वान् मतिमान् विचक्षणो
भुञ्जीत आहारु [13]शुचि प्रणीतम् ।
25 न चैव अध्युषित तत्र भोति
अ[14]गृध्नु सो भुञ्जति यु[15]क्तयोगी ॥ ६० ॥

किं चापि विद्वान् मतिमान् विचक्षणो
आभाष्यते बालु कुतो हि स्वागतम् ।

---

१ C सद for तद. २ B अध्योषिता. ३ A पापमित्रेण. ४ C चित्तस्य व्यवस्थं. ५ A पापकर्म; C पापकर्माः. ६ C कालेन चित्तेन सुसंयलानां for the line. ७ A न जल्पि°; C अजल्पितव्यम् for स जल्पितव्यम्. ८ B दोषं. ९ B मात्रज्ञत; C मात्रज्ञान for मात्रज्ञतु. १० B न भोजनस्वादनसंप्रणीती for the line. ११ A लुब्धा. १२ B विसा; C विषा for बिसा. १३ B सुविप्रणीतम् for शुचि प्रणीतम्. १४ A अगृध्दु; B अगृद्ध for अगृध्नु. १५ C तत्र योगी for युक्तयोगी.

तथ संगृहीत्वा प्रियवद्यताय
कारुण्यतां तत्र उपस्थपेति ॥ ६१ ॥
यो भोति बालान हितानुकम्पी
तस्यैव बाला व्यसनेन तुष्टाः ।
एतेन दोषेण जहित्व बालान् 5
मृगोवदेको[1] विहरेदरण्ये ॥ ६२ ॥
ईम ईदृशान्[2] दोष विदित्व पण्डितो N 112
न जातु बालेहि करोति संगतिम्[3] ।
विहीन[4]प्रज्ञानुपसेवतो मे
स्वर्गात्तु हानिः कुत बोधि लप्स्ये[5] ॥ ६३ ॥ 10
मैत्रीविहारी च भवन्ति पण्डिताः
करुणाविहारी मुदिताविहारी ।
उपेक्षकाः सर्वभवेषु नित्यं
समाधि भावेत्व स्पृशन्ति बोधिम् ॥ ६४ ॥
ते बोधि बुद्धित्व शिवामशोकां 15
विदित्व सत्त्वान् जनव्याधिपीडितान् ।
कारुण्यतां तत्र उपस्थपेत्वा
कथां कथेन्ति परमार्थयुक्ताम् ॥ ६५ ॥
ये तां विजानन्ति जिनान धर्मता-
मनाभिलप्यं सुगतान सत्यम् । 20
ते धर्म श्रुत्वा इम एवरूपां
लप्स्यन्ति क्षान्ति अरियां निरामिषाम् ॥ ६६ ॥

इति श्रीसमाधिराजे गम्भीरधर्मक्षान्तिपरिवर्तो नाम नवमः ॥ ९ ॥

---

१ B मृगेव एको. २ A इमीदृशान्. ३ A B संस्तवम् for संगतिम्. ४ C निहीन° for विहीन°. ५ B लप्स्यते.

# १०

## पुरप्रवेशपरिवर्तः ।

N 113 तत्र भगवान् पुनरपि चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म–तस्मात्तर्हि कुमार प्रतिपत्तिसारो भविष्यामीत्येवं त्वया कुमार सदा शिक्षितव्यम् । तत् कस्य हेतोः ? प्रतिपत्तिसारस्य हि कुमार बोधिसत्त्वस्य महासत्त्वस्य न दुर्लभा भवत्यनुत्तरा सम्यक्संबोधिः, किं[1] पुनरयं समाधिः । अथ खलु चन्द्रप्रभः कुमारभूत उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत् – आश्चर्यं भगवन् यावत् सुभाषिता चेयं भगवता[2] बोधिसत्त्वानां महासत्त्वानामववादानुशासनी सर्वबोधिसत्त्वशिक्षा देशिता स्वाख्याता सुप्रज्ञप्ता । सर्वतथागतगोचरोऽयं भगवन् यत्र अभूमिः सर्वश्रावकप्रत्येकबुद्धानां कः पुनर्वादोऽन्यतीर्थिकानाम् ? प्रतिपत्तिसाराश्च वयं भगवन् भविष्यामः अनपेक्षाः कायजीविते[3] च भूत्वा तथागतस्यानु[4] शिक्षिष्यामहे । तत् कस्य हेतोः ? शिक्षितुकामाश्च वयं भगवंस्तथागतस्य, अभिसंबोद्धुकामा वयं भगवन्ननुत्तरां[5] सम्यक्संबोधिम् । अर्थिका वयं भगवन् अनुत्तरायाः[6] सम्यक्संबोधेः । विध्वंसयितुकामाश्च वयं भगवन् मारं पापीयांसम् । मोचयितुकामा वयं भगवन् सर्वसत्त्वान्[7] सर्वभयेभ्यः सर्वदुःखेभ्यः[8] । अधिवासयतु मे भगवान् श्वस्तने मम गृहे भक्तं भोक्तुं सार्धं बोधिसत्त्वगणेन सार्धं भिक्षुसंघेन चानुकम्पामुपादाय[9] । N 115 अधिवासयति स्म भगवांश्चन्द्रप्रभस्य कुमारभूतस्य तूष्णींभावेन श्वस्तने[10] गृहे भक्तं भोक्तुं सार्धं बोधिसत्त्वगणेन भिक्षुसंघेन[11] चानुकम्पामुपादाय । अथ खलु चन्द्रप्रभः कुमारभूतो भगवतस्तूष्णींभावेनाधिवासनं[12] विदित्वा उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा भगवतः पादौ शिरसाभिवन्द्य भगवन्तं त्रिः प्रदक्षिणीकृत्य भगवतोऽन्तिकात् प्राक्रामत्[13] ॥

N 116 अथ खलु चन्द्रप्रभः कुमारभूतो[14] येन राजगृहं महानगरं येन[15] च स्वकं निवेशनं N 117 तेनोपसमक्रामत् । उपसंक्रम्य चन्द्रप्रभः[16] स्वगृहं प्राविशत् । प्रविश्य च तामेव रात्रिं प्रभूतं प्रणीतं N 118 खादनीयं भोजनीयं स्वादनीयमभिसंस्कारयति स्म । शतरसं च भोजनं संपाद्य[17] तस्या एव रात्र्या अत्ययेन राजगृहं महानगरं सुसिक्तं सुसंमृष्टं मुक्तकुसुमाभिकीर्णं[18] गन्धघटिकानिर्धूपितमुच्छ्रित-

---

१ A किमङ्ग पुनः ; B किमतः पुनः for किं पुनः. २ After भगवता, A adds: अर्हता सम्यक्संबुद्धेन प्रतिपत्तिसमाध्यवतारः सुदेशितः सुप्रज्ञप्तः, while B adds: तथागतेनार्हता. ३ B कायजीविता for °जीविते. ४ B तथागतेभ्यः for तथागतस्य. ५ A C om. भगवन्. ६ A अनुत्तरायां सम्यक्संबोधौ for अनुत्तरायाः सम्यक्संबोधेः. ७ After °सत्त्वान्. B adds सवस्त्रपेभ्यः. ८ After °दुःखेभ्यः, AB read a passage given in App. I (No 10).

९ After उपादय, A B add : तत्रेदमुच्यते–

अभियाचमि ससुरनरेन्द्रं शुचि मम मन्दिर भुञ्जितु भक्तम् ।
अधिवासयतु सुरवरनाथो मय्यनुकम्पयमान मुनीन्द्रो ॥

१० B श्वश्वेतनया ; C श्वश्वेतनया for श्वस्तने. ११ After °संघेन, B adds सार्धं बोधिसत्त्वसंघेन. १२ A C अधिवासनां. १३ After प्राक्रामत्, A B read a passage given in App. I ( No 11 ). १४ After कुमारभूतो, A adds : अत्रान्तरे सर्वं मार्गमनेकविचित्रविकारप्रकारव्यूहं मार्गमलंकृत्य ; while B adds : अवान्तरसमार्गमनेकरत्नविकारप्रकामव्यस्तमार्गमलंकृतं कृत्वा, गृध्रकूटात् पर्वतादवतीर्य. १५ After येन, A B add : दिव्यतुङ्गविशालोदारं स्वकं. १६ After चन्द्रप्रभः, A B add : तेनोपजगाम, उपेत्य स्वगृहं ( B स्वनिवेशनं ). १७ A B संपादयित्वा for संपाद्य. १८ After °भिकीर्णं, A B read a passage given in App. I (No. 12).

च्छत्रध्वजपताकं धूपनधूपितं वितानविततमवसक्तपट्टदामकलापं सरथ्यान्तरापणमपगतपाषाण- N 119
शर्करकठल्लं विचित्रपुष्पाभिकीर्णं चन्दनचूर्णाभिकीर्णं गवाक्षतोरणनिर्यूहपञ्जरजालार्धचन्द्रसमलंकृतं
चन्दनानुलिप्तमकार्षीत् । सर्वावन्तं नगरमुत्पलकुमुदपद्मपुण्डरीकाभ्यवकीर्णमकार्षीत् । स्वं च गृहं
सर्वालंकारव्यूहितमकार्षीत् । अथ खलु चन्द्रप्रभः कुमारभूत इमानेवंरूपान् नगरव्यूहान् गृहव्यूहान् N 120
भोजनव्यूहान् समलंकृत्य राजगृहान्महानगरान्निष्क्रम्य येन गृध्रकूटपर्वतो येन भगवांस्तेनोपसमक्रामत् । 5 N 121
उपसंक्रम्य भगवन्तं त्रिः प्रदक्षिणीकृत्य एकान्तेऽस्थात् । एकान्ते स्थितः चन्द्रप्रभः कुमारभूतो
भगवतः कालमारोचयामास—कालो भगवन्, कालः सुगत, सिद्धं भक्तं यस्येदानीं कालं
मन्यसे । अथ खलु भगवान् उत्थायासनात् कल्यमेव निवास्य पात्रचीवरमादाय महता भिक्षुसंघेन N 122
सार्धं परिपूर्णेन भिक्षुशतसहस्रेण संबहुलैश्च बोधिसत्त्वैर्महासत्त्वैः परिवृतः पुरस्कृतोऽनेकैश्च
देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्यशतसहस्रैः पूज्यमानोऽभिष्टूयमानो महता 10 N 123
बुद्धानुभावेन महता बुद्धप्रातिहार्येण महता बुद्धेर्यापथेन रश्मिकोटिनियुतशतसहस्रैर्निश्चरद्भिर्नाना-
तूर्यशतसहस्रैः पुष्पगन्धमाल्यविलेपनचूर्णचीवरैः प्रवर्षद्भिर्येन राजगृहं महानगरं तेनोपसंक्रामति
स्म । चन्द्रप्रभस्य कुमारभूतस्य निवेशने प्रक्षिप्तश्च भगवता दक्षिणश्चक्ररत्नसमलंकृतः अपरिमित-
कुशलसंचितपादरत्न इन्द्रकीले, अथ तावदेव तस्मिन् महानगरे अनेकानि आश्चर्याद्भुतानि
प्रातिहार्याणि संदृश्यन्ते स्म । इयमत्र धर्मता । तत्रेदमुच्यते— 15 N 124

पुरवर[1] प्रविशन्ति[2] नायकस्मिन्[3]
चरणवरु स्थपितश्च इन्द्रकीले ।
चलति[4] वसुमती शिरीय तस्य
प्रमुदित भोन्ति पुरोत्तमस्मि सत्त्वाः ॥ १ ॥

ये नर क्षुधिताः पिपासिता वा 20 N 125
न भवति तेष जिघत्स तस्मि काले ।
अपगत भवती क्षुधा पिपासा
यद् जिनु निक्षिपतीन्द्रकीलि पादम् ॥ २ ॥

तथ पुन नर ये भवन्ति अन्धाः N 126
श्रोत्रविहीन अनाथ अल्पपुण्याः । 25
सर्वि प्रतिलभन्ति चक्षु श्रोत्रं
यद् जिनु निक्षिपतीन्द्रकीलि पादम् ॥ ३ ॥

यमविषये ये केचि भोन्ति प्रेताः
सुदुःखित खेटसिंघाणकभोजनाशाः ।
सर्वि सुखित भोन्ति आभस्पृष्टा 30
यद् जिनु निक्षिपतीन्द्रकीलि[5] पादम् ॥ ४ ॥

---

१ B पुरवरु. २ A C प्रविशन्तु. ३ A नायकेन ; B नायकेनो. ४ B चलित. ५ A मुनिपति for निक्षिपति.

शैलशिखरशृङ्गपर्वताश्च
तथ वरपादपशालकर्णिकाराः।
सर्वि अभिनमन्ति येन बुद्धो
यद जितु निक्षिपतीन्द्रकीलि पादम्॥ ५॥

5 सनगरनिगमा ससागरान्ता
प्रचलि वसुंधरि षड्विकार[1] सर्वा।
न भवति विहेठ कस्यपि चेह
यद जितु निक्षिपतीन्द्रकीलि पादम्॥ ६॥

N 127 मरु[2]मनुजकुम्भाण्डराक्षसाश्च
10 नभःस्थित तुष्ट[3] उदग्रचित्ताः।
छत्र धरिय च लोकनायकस्य
परम[4]प्रीणित जनेत्व बोधिछन्दम्॥ ७॥

श्रूयति च मनोज्ञ वाद्यशब्द-
स्तूर्यसहस्र अघट्टिता रणन्ति।
15 प्रमुदितास्तद भोन्ति सर्वसत्त्वा
यद जितु निक्षिपतीन्द्रकीलि पादम्॥ ८॥

वृक्षशतसहस्र ओनमन्ति
सर्वि प्रपुष्पित भोन्ति तस्मि काले।
देवशतसहस्र अन्तरीक्षे
20 पूज करोन्ति अमानुषी जिनस्य॥ ९॥

ऋषभगण तदा नदन्ति हृष्टा
हयद्विरदाधिपती प्रवृद्धकायाः।
मृगपतयो नदन्ति सिंहनादं
यद जितु निक्षिपतीन्द्रकीलि पादम्॥ १०॥

25 महीपतय ये केचि भूमिपाला
दिशि[5]विदिशासु च आगता भवन्ति।
N 128 धरणितलि पतन्ति हृष्टचित्ता
दृष्टु जिनस्य शिरीमिममेवरूपाम्॥ ११॥

अन्ये अभिष्टुवन्ति लोकनाथम्
30 अपरि क्षिपन्ति जिनस्य पुष्पवृष्टिम्।

---

१ B °विकारि सर्वाः. २ C स्तुर° for मरु.° ३ A पुष्ट for तुष्ट. ४ B °पणीत; B °परीत for °प्रीणित. ५ A दशदिशि विदिशासु for दिशिविदिशासु.

अपरि दशनखाञ्जलिं करित्वा
　　अहो जिनु कारुणिको भणन्ति[1] वाचम् ॥ १२ ॥

केचि वर क्षिपन्ति मुक्तहारान्
　　बहुविध आभरणान् जनेत्व प्रीतिम् ।
चीवर रतनान् क्षिपन्ति अन्ये
　　अतुलियु अग्रु जनित्व बोधिचित्तम्[2] ॥ १३ ॥

केचि वर क्षिपन्ति हेम[3]जालं
　　अपरि पुनर्मुखफुल्लकं क्षिपन्ति ।
केचि वर क्षि[4]पन्ति हेमनिष्कां-
　　स्तथ अपरे परिहारकान् क्षिपन्ति ॥ १४ ॥

कटकवर क्षिपन्ति केचि तत्र
　　अपरि केयूर क्षिपन्ति रत्नचित्रान् ।
अम्बर कुसुमान् क्षिपन्ति अन्ये
　　चित्त जनेत्व 'सियां वयं पि बुद्धाः[5]' ॥ १५ ॥

अपरि नरः क्षिपन्ति हेम[6]चित्रां-
　　स्तथ मणिसू[7]त्रवरान् प्रसन्नचित्ताः ।
केचि च रतनजा[8]लकं क्षिपन्ति
　　द्वारि यदा स्थितु भोति लोकनाथः ॥ १६ ॥

परमदुःखित ये भवन्ति सत्त्वा
　　बहुविधुपद्रवु शोकशल्य प्राप्ताः ।
सर्वि सुखसमर्पिता भवन्ति
　　पुरुषवरस्य शिरीय नायकस्य ॥ १७ ॥

परभृतशुकसारिकामयूरा-
　　स्तथपि च सारसचापहंसक्रौञ्चाः ।
सर्वि द्विजगणा नभे स्थिहित्वा
　　परममनोज्ञरुतानि व्याहरन्ति ॥ १८ ॥

प्रमुदित तद भोन्ति पक्षिसंघा
　　मधुरमनोज्ञरुतं प्रमुञ्चमानाः ।
रागु तथ [9]समेन्ति दोषमोहं
　　ये च श्रृणन्ति मनोज्ञ पक्षिशब्दान् ॥ १९ ॥

---

१ B हरन्ति; C महन्ति for भणन्ति. २ C बोधिसत्त्वम्. ३ C हेममाला. ४ In C, portion from °पन्ति upto 49st. *ab* is missing on damaged folio. ५ B विबुद्धा for पि बुद्धाः. ६ B हेमसूत्रां. ७ B मणिचूडधरान्. ८ B °जालिकां for °जालकं. ९ A गमेन्ति for समेन्ति.

श्रुणिय रञ्जनीय सत्त्वकोट्यः
सर्वि च लभन्ति क्षान्तिमानुलोमाम्।
N 130 तांश्च सुगत व्याकरोति सर्वान्
भविष्यथ यूय जिना अनागताश्च[1] ॥ २ ॥
5 न भवति किलेशु तस्मि काले
सर्वि[2] सगौरव भोन्ति धर्मराजे।
अपगतभयदोषमोहजाला:[3]
प्रणिपतिताः सुगतमभिष्टुवन्तः ॥ २१ ॥
पश्यिय[4] तद रूप नायकस्य
10 स्पृह जनयन्ति वरस्मि बुद्धज्ञाने।
कद वय लभे ज्ञानमेवरूपम्
आशयु ज्ञात्व जिनोऽस्य व्याकरोति ॥ २२ ॥
रश्मि शतसहस्र निश्चरन्ति
एकैकतः[5] सुगतस्य रोमकूपात्।
15 तदुत्तरि यथ गङ्गवालिका वा
न पि च निमित्तु गृहीतु शक्यु तासाम् ॥ २३ ॥
सूर्यप्रभ न भान्तिं तस्मि काले
न पि मणि नाग्नि न सर्वदेवतानाम्।
N 131 सर्वि प्रभ न भान्ति[6] तस्मि काले
20 यद प्रविशन्त पुरं विभाति बुद्धः ॥ २४ ॥
पद्मशतसहस्र प्रादुर्भूता
धरणितु कोटिसहस्रपत्र शुद्धाः।
यत्र दशबलः स्थपेति पादं
मार्गि[7] गतः सुगतो महागणेन[8] ॥ २५ ॥
25 अशुचि केलिमला[9] न भोन्ति तस्मि काले
नगरवरं[10] प्रविशन्ति नायकस्मिन्।
नगरु सुरभि सर्वि धूपनेन
गन्ध मनोज्ञ प्रवायते समन्तात् ॥ २६ ॥
वीथि नगरि तद[11] भोति सर्वा
30 अपगतलोष्टकठल्ल सिक्त गन्धैः।

---

१ B अनागतेश्च. २ B सर्विंष गौरव भोन्ति धर्मराजा for the line. ३ T om. अपगत...... ष्टुवन्तः. ४ B प्रतिपत्तिषु सुगतस्य तिष्ठवन्तः for the line. ५ B एकीकता for एकैकतः. ६ A भोन्ति for भान्ति. ७ B मार्गगतः. ८ B om. महा°. ९ B करमला न भान्ति for कलिमला न भोन्ति. १० B नगरवनं for °वरं. ११ B शुद्ध भोन्ति for तद भोति.

पुण्य दशबलस्य एवरूपा
विविध विकीर्णु भवन्ति मुक्तपुष्पाः ॥ २७ ॥
यक्ष शतसहस्र रौद्रचित्ताः
कनकनिभं द्विपदेन्द्रु दृष्ट्व बुद्धम् ।
जनयि विपुलु नायकस्मि प्रेमं 5
शरणंमुपेति[1] च बुद्धधर्मसंघान् ॥ २८ ॥
ये च देवशतसहस्र कोटियो वा N 132
उपगत सर्वि नरेन्द्रदर्शनाय ।
वर्षति सुगतस्य पुष्पवर्षं
गगनतले च स्थिहन्ति मुक्तपुष्पाः ॥ २९ ॥ 10
ये मनुज क्षिपी जिनस्य पुष्पं
गगनतले भवतीति पुष्पछत्रम् ।
ये[2] पुन कुसुमान् क्षिपन्ति देवा
धरणितले स्तृत[3] भोन्ति दिव्यपुष्पाः ॥ ३० ॥
न[4] भवति कदाचि दृष्ट्व तृप्ती 15
देवमनुष्यकुभाण्डराक्षसानाम् ।
यद दशबलु दृष्ट्व लोकनाथं
प्रमुदित भोन्ति उदग्रकल्यचित्ताः ॥ ३१ ॥
न मनसि तद भोन्ति दिव्यपुष्पा N 133
न च पुन विस्मयु जायते च तत्र । 20
यद पुरुषवरस्य कायु दृष्ट्वा
तुष्ट भवन्ति उदग्र सर्वसत्त्वाः ॥ ३२ ॥
ब्रह्म दशबलस्य[5] दक्षिणेनो
तथ पुन वामतु शक्र देवराजा ।
गगनतलगता अनल्प देवकोट्यः 25
पुरुषवरस्य जनेन्ति चित्रिकारम् ॥ ३३ ॥
परिवृत जिनु देवदानवेहि
मरुमनुजान शिरिं प्रसित्व सर्वाम् ।
धरणि क्रमतलेहि चित्रयन्तो
प्रविशि पुरं भगवान्निमन्त्रणाय ॥ ३४ ॥ 30

---

१ B शरणमुपन्ति for °मुपेति. २ B यत् for ये. ३ A B स्थित for स्तृत. ४ B नच for न. ५ B °बल दृष्ट लोकनाथां for °बलस्य दक्षिणेनो.

N 134

कुसुमित अनुव्यञ्जनेहि काये[१]
यथ गगनं परिपूर्ण तारकेहि ।
प्रतपति स्थितु राजमार्गि बुद्ध-
श्चन्द्रो नभःस्थ यथैव पूर्णिमास्याम् ॥ ३५ ॥

5 मणिरतनु यथा विशुद्धु श्रेष्ठं[२]
व्यपगतदोषमलं प्रभासमानम् ।
दिशि विदिशि प्रमुञ्चि आभ शुद्धां
तथ जिनु भासति सर्वलोकधातुम् ॥ ३६ ॥
परिवृतु जिनु देवदानवेहि

10 प्रविशति राजगृहं नराण श्रेष्ठः ।
धरणि क्रमतलेहि चित्रयन्तो
प्रविशति चन्द्रप्रभस्य गेहि बुद्धः ॥ ३७ ॥
पुरवरु समलंकृतं समन्ताद्
बहु ध्वज कोटिसहस्र[३] उच्छ्रितात्र ।

15 गन्धवरविलिप्त सर्वभूमी
सुमनःप्रकीर्ण[४] तथैव वार्षिकारम्[५] ॥ ३८ ॥
यद सुगतु कथां कथेति नाथो
वीथिगतो मनुजान् कृपायमानः ।

N 135

निर्मितु जिनु तत्र निर्मिणित्वा

20 वितरति तेषु प्रणीत बुद्धधर्मान् ॥ ३९ ॥
दर्शनियुत[६] जिनान[७] निर्मितान
कनकनिभा अभिरूप दर्शनीया ।
परिवृतु जिनु बुद्ध[८] निर्मितेहि
वितरति शून्यत शान्त बुद्धबोधिम् ॥ ४० ॥

25 प्राणिशतसहस्र तं श्रुणित्वा
प्रणिदधि चित्तु वराग्रबुद्धज्ञाने ।
कद वय लभि ज्ञानमेवरूपं
आशयु ज्ञात्व जिनोऽस्य व्याकरोति ॥ ४१ ॥
केचि स्पृह जनेन्ति तत्र काले

30 परम अचिन्तिय लब्ध[८] तेहि लाभाः ।

---

१ B काया for काये. २ B येषु for श्रेष्ठं. ३ A बोधिसत्त्व for कोटिसहस्र. ४ A समनुकीर्ण for सुमनः प्रकीर्ण. ५ B वार्शिका च for वार्षिकारम्. ६ T om. st. 40. ७ A जिनस्य निर्मि; B जिनस्य निर्मितानि for जिनाना निर्मितान. ८ B तत्र for बुद्ध. ९ B जिनु for चित्त. ८ A तेहि लब्ध लभान् for लब्ध तेहि लाभाः

येहि जिनु निमन्त्रितो नरेन्द्रो
　　न च पर्यन्त स तेषु[1] दक्षिणायाः ॥ ४२ ॥
केचि पुनरुपपादयि सुचित्तं
　　श्वो वय कारुणिकं निमन्त्रयामः ।
हितकरमनुकम्पकं[2] प्रजानां
　　यस्य सुदुर्लभु दर्शनं भवेषु[3] ॥ ४३ ॥
केचि स्थित निर्यूहखोटके हि　　N 136
　　सुभगु विभूषितगात्र प्रेमणीयाः[4] ।
दिव्य दशबलस्य मुक्तपुष्पा-
　　ण्यवकिरतेऽग्रु जनित्व बोधिचित्तम् ॥ ४४ ॥
सुरुचिर वर चम्पकस्य मालां
　　तथ अतिमुक्तक गन्धवर्षिकां[5] च ।
अपरि पुन क्षिपन्ति पट्टदामान्
　　परम निरुत्तरु चित्तु संजनित्वा ॥ ४५ ॥
केचि स्थित गृहे गृहीतपुष्पाः[6]
　　परमविभूषितकायु चीवरेहि ।
पुष्प विविधु गृहीत्वा[7] पट्टदामान्
　　प्रवर्षि[8] येन जिनो महानुभावः ॥ ४६ ॥
पद्मकुमुदोत्पलान् क्षिपन्ति केचि
　　अपरि क्षिपन्ति विशिष्ट हेमपुष्पान् ।
मणिरतन क्षिपन्ति केचि तस्मिन्
　　अपरि क्षिपन्ति च चूर्ण चन्दनस्य ॥ ४७ ॥
अपरिमित भवन्ति अच्छरीया
　　अतुलिय ये न च शक्यु कीर्तनाय ।
पुरवरु प्रविशन्ति नायकस्मिन्　　N 137
　　बहुजनकोट्य[9] स्थिहिंसु बुद्धज्ञाने ॥ ४८ ॥
अबृह अतपाश्च दृष्टसत्याः
　　सुदृंश[10] सुदर्शन ये च अन्य देवाः ।
तथ[11] पुनरकनिष्ठ वीतरागा[12]
　　उपगत सर्वि[13] नरेन्द्रदर्शनाय ॥ ४९ ॥

---

१ A देश for तेषु. २ B हितकरु for हितकरम्. ३ B भवेयुः for भवेषु. ४ A प्रेमणीयाम् for °णीयाः. ५ A गन्धवार्षिकाणाम्. ६ B गृहीत्व पुष्पान् for गृहीतपुष्पाः. ७ A गृह्य for गृहीत्व. ८ B प्रवशितु for प्रवर्षि. ९ B °कोटि for °कोट्य. १० B सदृश. ११ C अथ for तथ. १२ After वीतरागा, C adds : बृहत्फलसदृशाश्च दृष्टसत्त्वाः शत ... यथा प्रभासमानो. १३ C तत्र for सर्वि.

तथ शुभमरुताश्च अप्रमेया
अपरिमित[1] शुभा उदग्रचित्ताः ।
शुभकृत्स्न नियुताश्च अप्रमेया
उपगत पश्यितु नायकं महर्षिम् ॥ ५० ॥

5 अपरिमितु तथाप्रमाण-आभा
तथ पुन देव परीत्त आभ ये च ।
बहु नियुत आभस्वराण तस्मिन्
उपगत पश्यितु तेऽपि लोकनाथम् ॥ ५१ ॥

बहव शतसहस्र पारिषद्या-[2]
10 स्तथ पुन ब्रह्मपुरोहिताः प्रसन्नाः ।
N 138 बहुशत पुन ब्रह्मकायिकानां
उपगत[3] नायकदर्शनाय सर्वे ॥ ५२ ॥

तथ पुन परनिर्मितापि[4] देवा-
स्तथ निर्माणरतिश्च शुद्धसत्त्वाः ।
15 प्रमुदित तुषिताथ यामदेवा
उपगत सर्वि नमस्यमान बुद्धम् ॥ ५३ ॥

त्रिदश अपि च शक्र देवराजा
अप्सरकोटिशतैः सहागतोऽत्र ।
कुसुमवर्ष संप्रवर्षमाणो
20 उपगत बुद्धमुनीन्द्रदर्शनाय ॥ ५४ ॥

चतुरि चतुर्दिशासु लोकपाला
वैश्रवणो धृतराष्ट्र नागराजा ।
विरूढकु[5] विरूपाक्षु हृष्टचित्ता
उपगत सर्वि नरेन्द्र ते स्तुवन्ता ॥ ५५ ॥

25 ऐलविल बलवन्त यक्षराजा
परिवृत यक्षशतेहि[6] प्रेमजातः ।
गगनतलि स्थिहित्व हृष्टचित्तः
क्षिपति अनेक विचित्र पुष्पवर्षम् ॥ ५६ ॥

N 139 अपरि पुनरनन्त[7] मालधारी
विविध विचित्र गृहीत्व माल्यगन्धान्[8] ।

---

१ A C अपरिपरित्त for अपरिमित. २ B पार्षदाद्याः for पारिषद्याः. ३ C तथागत for उपगत. ४ Mss. परिनिर्मितापि. ५ B विरुधक for विरूढकु. ६ C लक्षशतेहि for यक्षशतेहि. ७ A C अपि पुन सद मत्त for अपरि पुनरनन्त. ८ A गन्धमाल्यान् for माल्यगन्धान्.

सर्वि सपरिवार हृष्टचित्ताः
　　पुरुषवरस्य करोन्ति तत्र पूजाम् ॥ ५७ ॥

वहव शत करोटपाणि[1] यक्षा
　　अपि च सुभूषि[2] तेष यक्षकन्याः ।
सुमधुर सुमनोज्ञ यक्षवाद्यै-
　　स्तूर्यशतेहि[3] करोन्ति बुद्धपूजाम् ॥ ५८ ॥　　5

ललित-मधुर-गीत-वादितस्मिन्
　　सुकुशलैः सह किन्नरीसहस्रैः ।
द्रुम उपगत गन्धमादनातो
　　जिनवरु पूजितु[4] किन्नराण राज्ञा[5] ॥ ५९ ॥　　10

शंवर बल वेमचित्र राहु
　　दानवकन्य सहस्रपारिवाराः ।
असुरगण महर्द्धिकाश्च[6] अन्ये
　　उपगत ते रतनानि वर्षमाणाः ॥ ६० ॥

शतनियुत अनन्त राक्षसानां　　15　　N 140
　　राक्षसकोटिशतैरुपास्यमानाः[7] ।
पृथु विविध विचित्र मुक्तपुष्पान्
　　पुरुषवरस्य क्षिपन्ति गौरवेण[8] ॥ ६१ ॥

तथपि च अनवतप्तु नागराजा
　　परमसुशिक्षिताश्च[9] नागकन्याः ।　　20
तूर्यशतसहस्र नादयन्त्यो[10]
　　उपगत पूजन तत्र लोकनाथम् ॥ ६२ ॥

पञ्चशत अनवतप्तु[11] पुत्रा
　　विपुलु अनुत्तरु ज्ञान प्रार्थयन्तः ।
स्वजनपरिवृता उदग्रे[12] भूत्वा　　25
　　उपगत पूजयितुं स्वयं स्वयंभूम् ॥ ६३ ॥

तथपि च अपलालु नागराजा　　N 141
　　पुरुषवरस्य कृताञ्जलिः प्रणम्य ।

---

१ C करोडपाद for करोटपाणि. २ B अभूषिय, C अभूषि for सुभूषि. ३ B सूर्यशकेहि करोन्ति तत्र पूजाम् for the line. ४ A पूजति; B पूजन for पूजितु. ५ C पूजां for राज्ञा. ६ B महर्षिकाश्च for महर्द्धि°. ७ A B उपास्यमानः. ८ After गौरवेण in st. 61, A B T read a passage given in App. I ( No. 13 ). ९ B °क्षित तस्य नागकन्या. १० C वादयन्त्यो for नाद°. ११ B °तप्तपुत्रा; C अनोपतप्तपुत्रा. १२ C उदग्रभूता.

वर रुचिर गृहीत्व नागपुष्पान्[1]
स्थित गगने मुनिराज सत्करोन्तः ॥ ६४ ॥

तथपि च मुचिलिन्द[2] नागराजा
प्रीतमनाः परितुष्ट हर्षजातः ।

5 विविध रत्नमौक्तिकं गृहीत्वा
उपगमि नायकु[3] अभिकिरन्तु तत्र ॥ ६५ ॥

तथपि च कालिकोऽपि नागराजा
उपगतु मुखु तथागतस्य हृष्टचित्तः[4] ।

वर रुचिर गृहीत्व रत्नदामान्[5]
10 पुरुषवरस्य पूज करित्व श्रेष्ठाम् ॥ ६६ ॥

सोऽपि परम गौरवं[6] जनित्वा
अनुस्मरमाणु गुणांस्तथागतस्य ।

N 142 स्वजनपरिवृतः सनागसंघो
बहुविधु भाषति वर्ण नायकस्य ॥ ६७ ॥

15 नन्दु तथा उपनन्दु नागराजा
तथ पुनस्तक्षक कृष्णगौतमौ[7] च ।

उपगत जिनु ते नमस्यमानाः
प्रणिपतिताः सुगतस्य पादयोर्हि ॥ ६८ ॥

उपगत एलपत्रु नागराजा
20 परिवृत नागशतेहि रोर्चमानः[8] ।

मुनिवर जिनु काश्यपं स्मरन्तो
स्वक उपपत्ति अपश्यि अक्षणेषु ॥ ६९ ॥

अहो अहु पुरि आसि काङ्क्षप्राप्तो
मयि पुरि च्छिन्नु परित्तमेलपत्रम् ।

25 सो अहु उपपन्नु अक्षणस्मिन्
न सुकरु धर्म विजानितुं जिनस्य ॥ ७० ॥

क्षिप्र अहु जहित्व नागयोनिं
परम जुगुप्सितमेतु जन्तुकायम् ।

---

१ A नागमुक्ता; C नागपुष्प. २ C अचलेन्द for मुचिलिन्द. ३ C नायकमोकिरन्ति तत्र. ४ After हृष्टचित्तः, B reads the following:

वर रुचिर गृहीत्व नागराजा विविध रतनमौक्तिकं गृहीत्वा ।
उपगमि नायको किरन्तु तत्र तथपि च कालियकोऽपि नागराजा ॥

and repeats st. ६६. ५ B रत्नदामां for °दामान्. ६ C मौक्तिकं for गौरवं. ७ C °गोतमश्च for °गौतमौ च. ८ A C रोदमानः.

धर्ममहु विजानि शा[2]न्तिभावं  N 143

पुरुषवरेण य ज्ञातु बोधिमण्डे ॥ ७१ ॥

सागर अहिराजचक्रवर्ती

परिवृतु नाग[3]त्रिकोटिसहस्रैः ।

वरु[4]ण मनस्वी गृहीत्व मुक्ता[5]हारान्  5

उपगतु ते भगवन्तु पूजनाय[6] ॥ ७२ ॥

क्षिप्त[7] शिल जिनस्य तत्र येनो

गगनस्थितेन गृहीत्व तस्मि काले ।

राजगृहि स किम्पिलोऽपि यक्षः

पुरतः स्थितः सुगतस्य गौरवेण ॥ ७३ ॥  10

अलकवती समग्र राजधानी  N 144

शून्य अभूषि न तत्र कश्चि यक्षः ।

सर्वि क्रिय करित्व अन्यमन्यं

उपगत पश्यितु सर्वलोकनाथम् ॥ ७४ ॥

तथपि च खरकर्ण सूचिरोमा  15

आटविकस्तथ यक्ष भे[8]षकश्च ।

हैमवत शतगिरिश्च यक्ष

उपगत गर्दभको जिनं स्वयंभूम् ॥ ७५ ॥

इन्द्रकेतु विकट[9]श्च सुरूपो

वक्कु[10]लु पञ्चिकु शाक्य प्रवृ[11]द्धो ।  20

एते परेऽपि च यक्षेन्द्र सहस्ता

उपगत धूप[12]घटं परिगृह्य ॥ ७६ ॥

विकृत बहु दुःसंस्थितात्मभावा

विगलित-आभरणा अनेकरूपाः ।

बहव शतसहस्र तस्मि काले  25

उपगत तत्र गृहीत्व यक्ष पुष्पा[13]न् ॥ ७७ ॥

---

१ B धर्मं अहु निज निशीतिभावं; C धर्मु मुहु विजानि शीतिभावं for the line. २ T शान्तबोधिं for शान्तिभावं. ३ C नागत्य त्रिप्राणिकोटि सहस्रैः for the line. ४ C वरुण तथ मनस्वि मुक्तहारैः for the line. ५ B रत्नहारं for मुक्ताहारान्. ६ After पूजनाय in st, 72. AB add :

अन्यि बहुसहस्र नागराजा अपि च मनस्विय सागरो भुजगेन्द्रः ।

वर रुचिर गृहीत्व नाग पुष्पं उपगतु ते सुगतस्य पूजनाय ॥

७ C विद्धशील for क्षिप्त शिल. ८ B मेषकश्च; C भैसकश्च for भेषकश्च. ९ B विकटास्य for विकटश्च. १० B वक्कुलु. ११ B प्रवन्धो for प्रवृद्धो. १२ B धूपघटा for °घटं. १३ After पुष्पान् in st. 77, ABT read a passage given in App. I ( No.14 ).

जलनिधि निवसन्ति ये[1] सुपर्णा
उपगत ब्राह्मणवेश[2] निर्मिणित्वा ।
मुकुटधर विचित्र दर्शनीया
गगनस्थिताः सुगतं नमस्यमानाः ॥ ७८ ॥

N 146 5
नगरशत[3] ये केचि जम्बुद्वीपे
वनविहरेषु य तत्र[4] देवताश्च ।
सर्व नगरदेवताः समग्रा[5]
उपगत पूज करोन्त नायकस्य ॥ ७९ ॥

उपगत वनदेवता अनन्ता-
10 स्तथपि च सर्वि य शैलदेवताश्च ।
तथपि च नदिदेवताः समग्रा
उपगत पूज करोन्त नायकस्य ॥ ८० ॥

अटविमरुषु देवताशतानि
गिरिशिखरेषु य देवताः समग्राः ।
15 उत्स-सर-तडागदेवताश्च
उपगत सागरदेवताश्च बुद्धम् ॥ ८१ ॥

देव-असुर-नाग-यक्ष-संघा
गरुड-महोरग-किन्नराः कुम्भाण्डाः ।
तथपि च बहु प्रेतपूतनाश्चो[6]
20 पुरुषवरस्य करोन्ति चित्रिकारम् ॥ ८२ ॥

N 147
तेऽपि च जिनवरे करित्व पूँजां[7]
नगरवरं प्रविशन्ति नायकस्मिन् ।
देव असुरनागयक्षराजा
सततमतृप्त भवन्ति दर्शनेन ॥ ८३ ॥

25 यथ पुरिमभवेषु लोकनाथः
पुरिमजिनेषु अकार्षि पूज श्रेष्ठाम् ।
पुण्यफलविपाक एवरूपो
न च जनु तृप्तु नरेन्द्र पश्यमानः ॥ ८४ ॥

मेरु तथ सुमेरु चक्रवाला
30 हिमगिरिस्तथ गन्धमादनश्च ।

---

१ B येषु पश्य for ये सुपर्णा. २ C ब्राह्मवेश निंमिहित्वा. ३ B नगरपतय for नगरशत ये. ४ T वृक्षदेवताश्च for तत्र देव°. ५ A om. समग्रा. ६ B °प्रेतनाश्चो for °पूतनाश्चो. ७ B नित्यपूजां for पूजां.

आवरणा न ते जिनस्य भोन्ति
 आभ यदा जिनु मुञ्चि बुद्धक्षेत्रे ॥ ८५ ॥
ये च इह समुद्र बुद्धक्षेत्रे
 तेऽपि महीय समास्तदा भवन्ति ।
सर्वमिमु समन्तु बुद्धक्षेत्रं 5
 समु भवती कुसुमेहि संप्रकीर्णम् ॥ ८६ ॥
रश्मि शतसहस्र अप्रमेया N 148
 अवकिरि[1] पादतलेहि धर्मराजा ।
सर्वि निरय शीतला भवन्ति
 धर्मदुःख उपनीत सुखं च वेदयन्ति ॥ ८७ ॥ 10
धर्म दशबल संप्रभाषि तत्रो
 मरुमनुजान विशुद्ध भोति चक्षुः ।
प्राणि शतसहस्र अप्रमेया
 नियत भवन्ति च सर्वि बुद्धज्ञाने ॥ ८८ ॥
बहु इमि सुगतस्य प्रतिहार्या 15
 न सुकरु वक्तु च कल्पकोटियेभिः ।
पुरवर प्रविशन्ति नायकस्मिन्
 प्रमुदित सर्व जगज्जिनप्रवेशे ॥ ८९ ॥
इमि गुण सुगतस्य अप्रमेया
 नरवृषभस्य गुणाग्रपारगस्य । 20
सर्वगुणविशेषपारगस्य
 शिरसि नमस्यथ बुद्धपुण्यक्षेत्रम्[3] ॥ ९० ॥

इति श्रीसमाधिराजे पुरप्रवेशपरिवर्तो नाम दशमः ॥

---

१ A अवगिरी for अवकिरि. २ B om. st. 87 *cd* and 88. *ab* ३ C बुद्धमक्षेत्रम् for बुद्धपुण्यक्षेत्रम्.

## ११

## सूत्रधारणपरिवर्तः ।

अथ खलु भगवांश्चन्द्रप्रभस्य कुमारभूतस्य निवेशनरथ्यामवगाहमानश्चन्द्रप्रभस्य कुमारभूतस्य निवेशनं प्रविष्टोऽभूत् । प्रविश्य च न्यषीदत् प्रज्ञप्त एवासने । यथार्हं[1] चासने बोधिसत्त्वसंघो भिक्षुसंघश्च निषण्णोऽभूत् । अथ खलु चन्द्रप्रभः कुमारभूतो भगवन्तं बोधिसत्त्वसंघं भिक्षुसंघं च निषण्णं विदित्वा[2] स्वयमेव शतरसेन भोजनेन[3] प्रणीतेन प्रभूतेन खादनीयेन भोजनीयेन लेह्येन चोष्येण पेयेन[4] भगवन्तं संतर्प्य संप्रवार्य भगवन्तं भुक्तवन्तमपनीतधौतपाणिं[5] विदित्वा दिव्येन नवनवतिकोटीशतसहस्रमूल्येन दूष्ययुगेन[6] भगवन्तमभिच्छादयामास । तेषां च बोधिसत्त्वानां भिक्षुसंघस्य च प्रत्येकं प्रत्येकं त्रिचीवरमदात्[7] ॥

अथ[8] खलु चन्द्रप्रभः कुमारभूत एकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य भगवतः पादौ शिरसाभिवन्द्य[9] येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तं गाथाभिगीतेन[10] प्रश्नं परिपृच्छति स्म —

कथं चरन्तो विदु बोधिसत्त्वः
स्वभावु धर्माण सदा प्रजानते ।
कथं क्रियामाचरते विचक्षणः
क्रियामाचरते भोतारु वदाहि नायक ॥ १ ॥

कथं च जातिस्मरु भोति नायक
न चापि गर्भे उपपद्यते कथम् ।
कथं परीवारु भवेदभेद्य
प्रतिभानु[11] भोतीह कथमनन्तकम् ॥ २ ॥

सर्वेष सत्वान चरिं प्रजानसे
सर्वेषु धर्मेषु[12] ति ज्ञानु वर्तते ।
अनाभिभूता द्विपदानमुत्तमा
पृच्छामि प्रश्नं मम व्याकरोहि ॥ ३ ॥

स्वभाव धर्माणमभावु जानसे
अनाभिलप्यां गिर संप्रभाषसे ।
N 151 सिंहेन[13] वा धर्षित सर्वे क्रोष्टका
स्तथैव बुद्धेनिह अन्यतीर्थिकाः ॥ ४ ॥

---

१ C om. यथार्हं ... निषण्णोऽभूत्. २ After विदित्वा, AB add : महतीमर्घपाद्यानुपूर्वां कृत्वा. ३ B भोजनीयेन. ४ C पानीयेन for पेयेन. ५ B धोत्रपात्रपाणिं for °धौतपाणिं. ६ B °युग्मेन. ७ After अदात्, AB add इति followed by a passage given in App. I. (No 15). ८ AB om. ... कृत्वा. ९ B वन्दित्वा for अभिवन्द्य. १० After °भिगीतेन, AB add: मनसा. ११ A प्रतिज्ञानु for प्रतिभानु. १२ B धर्मेषु तज्ज्ञानु for धर्मेषु ति ज्ञानु. १२ B सिंहेन चा निर्जित सर्वलोको तथैव बुद्धेनिह अन्यतीर्थिकाः.

सर्वेष सत्त्वान चरिं प्रजानसे
　सर्वेषु धर्मेषु ज्ञानानुवर्तते ।
[1]असङ्गज्ञानी [2]परिशुद्धगोचरा
　[3]तं व्याकरोहि मम धर्मस्वामी ॥ ५ ॥

अतीतु जानासि तथा अनागतं
　यच्च इहा वर्तति प्रत्युत्पन्नम् ।
त्रियध्वज्ञानं ति [4]असङ्गु वर्तते
　तेनाहु पृच्छामि[5]हं शाक्यसिंहम् ॥ ६ ॥

त्रियध्वयुक्तान जिनान धर्मता
　त्वं धर्मतां जानसि धर्मराज ।
धर्मस्वभावकुशलः स्वयंभू-
　स्तेनाहु पृच्छामिह ज्ञानसागरम् ॥ ७ ॥

यत् किंचि धर्मं स्खलितं न तेऽस्ति
　ततो ति चित्तं निखिलं प्रहीणम् ।
प्रहीण ग्रन्था खिलमोहसार[6]ंका
　देशेहि मे बोधिचरिं नरेन्द्र ॥ ८ ॥　N 153

यल्लक्षणा धर्म जिनेन[7] बुद्धा-
　स्तल्लक्षणं धर्म मम प्रकाशय ।
यल्लक्षणं धर्ममहं विदित्वा
　तल्लक्षणं बोधि चरिष्यि चारिकाम् ॥ ९ ॥

विलक्षणां सत्त्वचरीमनन्तां
　कथं चरन्तश्चरिमोतरन्ति ।
चरीप्रवेशं मम देशय स्वयं
　श्रुत्वा च सत्त्वान चरिं [8]प्रजानियाम् ॥ १० ॥

विलक्षणं धर्मस्वभावलक्षणं
　स्वभावशून्यं प्रकृ[9]तीविविक्तम् ।
प्रत्यक्ष भोन्ति कथ बोधिसत्त्वः
　प्रकाशयस्व मम बुद्धनेत्रीम् ॥ ११ ॥

सर्वेषु धर्मेष्विह पारमिंगताः
　सर्वेषु निर्देशपदेषु शिक्षिताः ।

---

१ A असंज्ञज्ञानी ; B अशुद्धज्ञानी for असङ्गज्ञानी. २ B परिशुद्धि गोचरा ; C परिशुद्धगौरवा. ३ C तथां करोध मम धर्मस्वामी for the line. ४ B असन्तु. ५ C पृच्छाम्यह. ६ A B ° साटका. ७ B om. जिनेन बुद्धास्तल्लक्षणं. ८. B प्रजानयम्. ९ A B प्रकृतीविशुद्धम्.

निःसंशयी संशयकाङ्क्षछेदके[1]
प्रकाशयाही मम बुद्धबोधिम् ॥ १२ ॥

अथ खलु भगवांश्चन्द्रप्रभस्य कुमारभूतस्य चेतसैव चेतःपरिवितर्कमाज्ञाय चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म–एकधर्मेण कुमार समन्वागतो बोधिसत्त्वो महासत्त्वः एतान् गुणान् प्रतिलभते, क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबुध्यते। कतमेनैकेन धर्मेण इह कुमार बोधिसत्त्वो महासत्त्वः[2] सर्वधर्माणां स्वभावं यथाभूतं प्रजानाति? कथं[3] च कुमार बोधिसत्त्वो महासत्त्वः सर्वधर्माणां स्वभावं जानाति? इह कुमार बोधिसत्त्वो महासत्त्वः सर्वधर्माननामकान् नामापगतान् प्रजानाति। घोषापगतान् वाक्पथापगतान् अक्षरापगतान् उत्पादापगतान् निरोधापगतान् हेतुविलक्षणान् प्रत्ययविलक्षणान् विपाक[4]लक्षणानारम्भणलक्षणान् विवेकलक्षणान् एकलक्षणान् यदुतालक्षणान् निमित्तापगतान् अचिन्त्यांश्चिन्तापगतान् मनोपगतान् सर्वधर्मान् यथा[5]भूतं प्रजानाति। अथ खलु भगवांस्तस्यां वेलायामिमा गाथा अभाषत–

N 155 10

एकु निर्देश धर्माणां सर्वधर्मा अ[6]लक्षणाः।
देशिता वरप्रश्नेन यथाभूतं प्रजानता ॥ १३ ॥
य[7] एवं धर्मनिर्देशं बोधिसत्त्वः प्रजानति।
न तस्य भोति विष्ठानं सूत्र[8]कोट्या प्रभाषतः ॥ १४ ॥

15

अधिष्ठितो नायको हि भूतकोटीं प्रजानति।
प्रजानाति च तां कोटीं न चात्रो किंचि भाषितम् ॥ १५ ॥
एकेन सर्वं जानाति सर्वमेकेन पश्यति।
कियद् बहुं पि भाषित्वा न तस्योत्पद्यते मदः ॥ १६ ॥

20

तथास्य चित्तं निध्यातं सर्वधर्मा अना[9]मकाः।
शिक्षितो नामनिर्देशे भूतां वाचं प्रभाषते ॥ १७ ॥
शृणोति घोषं यं कंचित् पूर्वान्तं तस्य जानति।
ज्ञात्वा घोषस्य पूर्वान्तं घोषेण ह्रियते न[10] सः ॥ १८ ॥

N 156

यथा घोषस्य पूर्वान्तं एवं धर्माण लक्षणम्।
एवं धर्मान् प्रजानन्तो न गर्भेषूपपद्यते ॥ १९ ॥

25

अजातिः सर्वधर्माणामनुत्पत्तिं प्रजानति।
प्रजानन् जातिनिर्देशं भवेज्जातिस्मरः सदा ॥ २० ॥
यदा जातिस्मरो भोति तदा च चरते क्रियाम्।
क्रियामोतरमाणस्य परिवारो न भिद्यते[11] ॥ २१ ॥

---

१ AB °छेदकः. २ C om. महासत्त्वः. ३ B om. from कथं च upto जानाति. ४ A om. विपाकलक्षणानारम्भणलक्षणान्. ५ A om. यथाभूतं. ६ C सुलक्षणाः for अलक्षणाः. ७ B यत्र तं for य एवं. ८ A भूतकोट्यः for सूत्रकोट्या. ९ A अनात्मकाः for अनामकाः. १० B तमः for न सः. ११ B विद्यते for भिद्यते.

य एवं शून्यकान् धर्मान् बोधिसत्त्वः प्रजानति ।
न तस्य किंचिदज्ञातमेषा कोटिरकिंचना ॥ २२ ॥

अकिंचनायां कोट्यां हि किंचिद् बालैर्विकल्पितम् ।
येन ते कल्पकोटीयः संसरन्ति[1] पुनः पुनः ॥ २३ ॥

सचेत्ते कल्प जानीयुर्यथा जानति नायकः ।　　5
न तेषां दुःखु जायेत नापि गच्छेयु दुर्गतिम् ॥ २४ ॥

एवं पृथग्जना[2]ः सर्वे अजानन्त[3] इमं नयम् ।
क्षिपन्ति ईदृशान् धर्मान् यत्र दुःखं निरुध्यते ॥ २५ ॥

अलब्धिः सर्वधर्माणां धर्मसंज्ञा[4] प्रवर्तते ।
सा एवंजातिका संज्ञा संज्ञामेव विजानथ ॥ २६ ॥　　10

विजानना च संज्ञा च बालैरेतद्विकल्पितम्[5] ।　　N 157
प्रकल्पितेषु[6] धर्मेषु नात्र मुह्यन्ति पण्डिताः ॥ २७ ॥

पण्डितानामियं भूमिर्बालानां नात्र गोचरः[7] ।
गोचरो बुद्धपुत्राणां[8] शून्या धर्मा अनाविलाः ॥ २८ ॥

बोधिसत्त्वानामियं भूमिर्बुद्धपुत्रचरी इयम् ।　　15
बुद्धधर्माणलंकारो देशिता शान्त शून्यता ॥ २९ ॥

यदा च बोधिसत्त्वानां प्रहीणा भोति वासना ।
न ते ह्रियन्ति रूपेहि बुद्धगोत्रस्मि ते स्थिताः ॥ ३० ॥

अस्थान सर्वधर्माणां स्थानमेषां न विद्यते ।
य[9] एवं स्थान जानाति बोधिस्तस्य न दुर्लभा ॥ ३१ ॥　　20

दानं शीलं श्रुतं क्षान्तिं सेवित्वा मित्र भद्रकान् ।
ईमां[10] क्रियां विजानन्तः क्षिप्रं बोधिं स बुध्यते ॥ ३२ ॥

देवाथ[11] नागाः सद सत्करोन्ति
　　गन्धर्व यक्षा असुरा महोरगाः ।
सर्वे च राजान सुपर्णि किन्नरा　　25
　　निशाचराश्चास्य करोन्ति पूजाम् ॥ ३३ ॥

यशोऽस्य भाषन्ति च बुद्धकोटियो　　N 158
　　बहुकल्पकोट्योऽपि अधिष्ठिहन्तः ।

---

१ C संसरन्ते. २ B पृथग्गुणाः for पृथग्जनाः. ३ A अस्तरन्त इमं भयं for अजानन्त इमं नयम्. ४ C °संज्ञाय वर्तते for °संज्ञा प्रवर्तते. ५ B चोभे ते तद्विकल्पिते for बालैरेतद्विकल्पितम्. ६ A अकल्पिकेषु धर्मेषु; B अकल्पिते बुद्धधर्मे. ७ A संशयः for गोचरः. ८ C बुद्धधर्माणां for °पुत्राणां. ९ B यत्र च for य एवं. १० B इमाः क्रिया विजानन्तो क्षिप्रं बोधिं च बुध्यति for the line. ११ A देवाश्च for देवाथ.

धर्मं प्रकाशन्तिय भोति वर्णो
न शक्यु पर्यन्तु क्षपेतुं[1] तस्य ॥ ३४ ॥
यः शून्यतां जानति बोधिसत्त्वः
करोति सोऽर्थं[2] बहुप्राणिकोटिनाम् ।
5 देशेति धर्मं पर्यायसूत्रतो[3]
श्रुत्वास्य प्रेमं जनयन्ति गौरवम् ॥ ३५ ॥
ज्ञानं च तेषां विपुलं प्रवर्तते
येनेति पश्यन्ति नरोत्तमान्[4] जिनान् ।
क्षेत्रे च पश्यन्ति वियूह शोभनं
10 धर्मं च देशेन्ति ते लोकनाथाः ॥ ३६ ॥
मायोपमान् जानथ सर्वधर्मान्
यथान्तरीक्षं प्रकृतीय शून्यम् ।
प्रकृतिं पि सो जानति तेषं[5] तादृशी-
मेवं चरन्तो न कहिंचि सज्जति ॥ ३७ ॥
N 159 15 ज्ञानेनासङ्गेन करोति सोऽर्थं[6]
लोके चरन्तो वरबोधिचारिकाम् ।
ज्ञानेन ते वीक्षिय सर्वधर्मान्
प्रेषेन्ति ते निर्मित अन्यक्षेत्रान् ॥ ३८ ॥
ते बुद्धकृत्यं करियाण निर्मिता
20 प्रकृतीय गच्छन्ति यथैव धर्मताम् ।
यथाभिप्रायं च लभन्ति तेऽर्थं[7]
ये बोधिचित्तस्मि नराः प्रतिष्ठिताः ॥ ३९ ॥
स भोति बुद्धान सदा कृतज्ञो
यो बुद्धवंशस्य स्थितीय युज्यते ।
25 विरोचमानेन समुच्छ्रयेण
द्वात्रिंश कायेऽस्य[8] भवन्ति लक्षणाः ॥ ४० ॥
अन्याननन्तान् बहु आनुशंसान्
श्रेष्ठं समाधौ[9] चरमाणु लप्स्यते ।
महाबलो भोति सदा अकम्पियो
30 राजान तस्यो न सहन्ति तेजः ॥ ४१ ॥

---

१ C क्षमेतु for क्षपेतु. २ A स्वार्थं; B सार्थं for सोऽर्थं. ३ B पर्यायशून्यतां for °सूत्रतो. ४ C नरोत्तमं जिनम्. ५ B तेषु for तेष. ६. B तर्कं for सोऽर्थं. ७ C om. ते. ८ B कायस्य for कायेऽस्य. ९ A B स बोधौ.

प्रासादिको भोति महाभिषट्कः[1]　　　N 160
पुण्येन तेजेन शिरीय चोद्गतः ।
देवापि नो तस्य सहन्ति तेजो
यो बुद्धधर्मेषु चरेय पण्डितः ॥ ४२ ॥

मित्रं स भोति सद सर्वप्राणिनां　　　5
यो बोधिचित्तस्मि दृढं प्रतिष्ठितः ।
न चान्धकारोऽस्य कदाचि भोति
प्रकाशयन्तस्मि स बुद्धबोधिम् ॥ ४३ ॥

अपगतगिरवाक्पथा अनभिलप्या
यथ गगनं तथ ताः स्वभावधर्माः[2] ।　　　10
इम गति परमां विजानमानो
तथ तु भवति प्रतिभानु अक्षयं से ॥ ४४ ॥

सूत्रशतसहस्र भाषमाणः
सूक्ष्म प्रजानति पूर्विकां स कोटिम् ।
सद विदु भवती असङ्गवाक्यः　　　15　N 161
सुसुखुम धर्मस्वभावु जानमानः ॥ ४५ ॥

नयशतकुशलश्च नित्यु भोति
बहुविधघोषनिरुक्तिकोविदश्च ।
कर्मफलविभक्ति[3] निश्चिताश्चो
भोन्ति विशिष्ट विशेष एवरूपाः ॥ ४६ ॥　　　20

अविकलवेशधारी भोति
दशबलआत्मज पण्डितो महात्मा ।
सद स्मृति परिशुद्ध तस्य भोति
सुसुखुम धर्मस्वभावु जानमानः ॥ ४७ ॥

न श्रुणति अमनोज्ञ शब्दं[4] जातु　　　25
श्रुणति प्रणीत मनापु नित्य शब्दान् ।
सद भवति मनोज्ञ तस्य वाचा
सुसुखुम धर्मस्वभावु जानमानः ॥ ४८ ॥

स्मृतिमतिगतिप्रज्ञवन्तु भोति
तथपि च चित्तमनाविलं प्रसन्नम् ।　　　30

---

१ A महाभिषज्ञ; B महाभिशकः; N महाभिरूपः for महाभिषट्कः. २ A स्वभावशून्य for °धर्माः. ३ A °विरक्ति for °विभक्ति. ४ C om. शब्द.

N 162

सूत्रशतसहस्रु भाषते[1] अनेकान्
सुसुखुम धर्मस्वभावु जानमानः ॥ ४९ ॥

अक्षरपदप्रभेदकोविदश्चो[2]
रुत बहु जानति नैक अन्यमन्ये।
5 अर्थकुशल भोति व्यञ्जनो च
इम गुण धर्मस्वभावु जानमानः ॥ ५० ॥

देवमनुजनागराक्षसानाम्
असुरमहोरगकिन्नराण नित्यम्।
तेष सद प्रिय मनाप भोति
10 सुसुखुम धर्मस्वभावु जानमानः ॥ ५१ ॥

भूतगणपिशाचराक्षसाश्चो
परमसुदारुण ये च मांसभक्षाः।
तेऽस्य भयु न जातु संजनेन्ति
सुसुखुम धर्मस्वभावु जानमानः[3] ॥ ५२ ॥

N 163 15 विपुल कथं श्रुणित्व पण्डितानां
विपुल प्रजायति रोमहर्ष तेषाम्।
विपुल तद जनेन्ति बुद्धप्रेमं
विपुल अचिन्तियु तेषु भोति अर्थः ॥ ५३ ॥

पुण्यबल न शक्यु तेष वक्तुं
20 बहुमपि कल्पसहस्र भाषमाणैः।
अपरिमित अनन्त अप्रमेय
इमु सुगतान धरेत्व धर्मगञ्जम्[4] ॥ ५४ ॥

N 164 सर्व जिन अतीत पूजितास्ते
अपरिमिता य अनागताश्च बुद्धाः।
25 दशसु दिशासु ये स्थिताश्च बुद्धा
इम वर शान्त समाधि धारयित्वा[5] ॥ ५५ ॥

यथ नरु इह कश्चि पुण्यकामो
दशबल कारुणिकानुपस्थिहेय्या।
अपरिमित अनन्त कल्पकोटी-
30 रपरिमितं च जनेतु[6] प्रेम तेषु ॥ ५६ ॥

---

१ B C प्रभाषते for भाषते. २ A om. st. 50. ३ After जानमानः in st. 52, B reads a passage given in App. I (No. 16). ४ B धर्मराजम् for धर्मगञ्जम्. ५ C देशयित्वा for धारयित्वा. ६ B जनेत्व तेषु प्रेमं for जनेतु प्रेम तेषु.

द्वितीय नरु भवेत पुण्यकामो
इतु परमार्थनयात्तु गाथमेकाम् ।
धरिय [1]चरिमकालि वर्तमाने
पुरिमकु पुण्य[2]कला न भोति तस्य ॥ ५७ ॥

परम इयं विशिष्ट बुद्धपूजा    5
चरिमकि दारुणि कालि वर्तमाने ।
चतुपदमित गाथमेकु श्रुत्वा
धारयि पूजित तेन सर्व[3]बुद्धाः ॥ ५८ ॥

परम सद [4]सुलब्ध तेहि लाभा    N 165
परम सुभुक्तु सदा च राष्ट्रपिण्डम् ।    10
परम दशबलस्य ज्येष्ठपुत्रा
बहु जिन पूजित तेहि दीर्घरात्रम् ॥ ५९ ॥

अहमपि इह दृष्ट गृध्रकूटे
तथ मय व्याकृत तेऽपि बुद्धज्ञाने ।
अपि च मय परीतु मैत्रक स्यां    15
पुनरपि व्याकरणाय तस्मि काले ॥ ६० ॥

तथ पुनरमितायु तेष तत्रो
[5]भाषते बुद्ध अनेक आनुशंसाम् ।
सर्वि इमि सुखावतीं प्रविष्टो
अभिरति गत्व अक्षोभ्य पश्यि बुद्धम् ॥ ६१ ॥    20

कल्पशतसहस्र अप्रमेया    N 166
न च विनिपातभयं कदाचि भोति ।
इमु वरु चरमाणु बोधिचर्या-
मनुभवति स हि नित्य सौमनस्यम् ॥ ६२ ॥

तस्य इमु विशिष्ट एवरूपा    25
य इमु प्रकाशित श्रेष्ठ आनुशंसाम् ।
प्रतिपदमनुशिक्षमाण मह्यं
पश्चिमि कालि [6]धरेयु एत सूत्रम् ॥ ६३ ॥

इति श्रीसमाधिराजे सूत्र[7]धारणपरिवर्तो नामैकादशः ॥ ११ ॥

---

१ A चरिमि ; B चरमि for चरिम°. २ A पूर्णकला ; B पुण्यफला for पुण्यकला. ३ B संविबुद्धाः for सर्वबुद्धाः. ४ C अलब्ध for सुलब्ध. ५ B भाषति ; C भासते for भाषते. ६ B धरेथ सूत्रराजम् for धरेयु एत सूत्रम्. ७ B सूत्रधारपरिवर्तो for सूत्रधारण°.

# १२

## समाध्यनुशिक्षणापरिवर्तः ।

N 167 तत्र कुमार [1]यो बोधिसत्त्वो महासत्त्वः सर्वधर्माणां [2]स्वभावं प्रजानाति[3], तस्येमे एवंरूपा गुणानुशंसा भवन्ति--स तथागतानां भूतं गुणवर्णं भाषते । न च तथागतान् व्याख्याति[4] असता अभूतेन । तत् कस्य हेतोः ? यया धर्मतया तथागतः प्रभाव्यते[5], तां धर्मतां यथाभूतं प्रजानाति । [6]अनन्तान् बुद्धगुणान् प्रजानाति । तत् कस्य हेतोः ? अनन्ता हि कुमार बुद्धगुणा अचिन्त्याश्चिन्तापगताः । तेनाशक्यं[7] चिन्तयितुं वा प्रमातुं वा । तत् कस्य हेतोः ? चित्तं हि कुमार निःस्वभावमरूप्यमनिदर्शनम् । इति हि कुमार यत्स्वभावं चित्तं तत्स्वभावा[8] बुद्धगुणाः, यत्स्वभावा बुद्धगुणास्तत्स्वभावास्तथागताः, तत्स्वभावाः सर्वधर्माः । यः कुमार बोधिसत्त्वो महासत्व एवं सर्वगुणस्वभावनिर्देशं यथाभूतं प्रजानाति, अयं कुमार उच्यते

N 168 बोधिसत्त्वो महासत्त्वो निध्यातिमानसः । निःसरणकुशलः । त्रैधातुकनिःसरणं यथाभूतं प्रजानाति । यथावद्दर्शी अवितथवादी[9] अनन्यथाभाषी, यथावादी तथाकारी, अनभिनिविष्टस्त्रैधातुके त्रैधातुकसमतिक्रान्तः । समतिक्रान्तः कामभूमिं रूपभूमिं आरूप्यभूमिं क्लेशभूमिं नामभूमिं[10] घोषभूमिम् । अक्षरपदनयकुशलः । अक्षरविभावितज्ञानः । अनभिलप्यधर्मकोविदः । अक्षरज्ञः । अक्षरकुशलः । [11]अक्षरपदप्रभेदज्ञानकुशलः । अक्षरपद[12]प्रभेदविस्तारज्ञानकुशलः । सर्वधर्मपदप्रभेदकुशलः । सर्वधर्मपदप्रभेदविस्तारकुशलः । सर्वधर्मव्यवस्थानज्ञानकुशलः । निश्चितया बुद्ध्या समन्वागतोऽनभिभूतः [13]सर्वमारैः पापीयोभिर्मारकायिकाभिश्च देवताभिः ॥

अस्मिन् खलु पुनर्[14]धर्मपर्याये भाष्यमाणे अष्टानवतेर्नियुतानां देवमानुषिकायाः प्रजायाः [15]पूर्वपरिकर्मकृतायाः कोटीशतसहस्रावर्ताया धारण्या अनावरणायाश्च धर्मविपश्यनायाः क्षान्तेः

N 169 प्रतिलम्भोऽभूत् । ते च सर्वे भगवता व्याकृता अष्टाचत्वारिंशता कल्पैरसंख्येयशतसहस्रैरनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते । सर्वे च अन्यान्यनामान एकायुष्प्रमाणा अन्यान्येषु बुद्धक्षेत्रेषु अनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते । तत्रेदमुच्यते--

यो बोधिसत्त्व मतिमान् [16]प्राप्नोति अनुत्तरां [17]वरां बोधिम् ।
अर्थे च धर्मि कुशलो चरति स धर्मस्वभावस्मि ॥ १ ॥
नाभूत भणति वाचं बुद्धानां यादृशा गुणविशेषाः ।
स हि धर्मु तं जिनानां जानति शूरो विगतकङ्क्षः ॥ २ ॥
एकार्थ सर्वधर्मान् प्रजानति च शून्यतां स एकांशम् ।
नानार्थु नास्ति तेषां एकार्थे शिक्षितो भवति ॥ ३ ॥

---

[1] B C om. यो. [2] C स्वभावचिन्तितां यथाभूतं for स्वभावं. [3] A जानाति for प्रजानाति. [4] B अभ्याख्याति for व्याख्याति. [5] B प्रभाषते for प्रभाव्यते. [6] B om. अनन्तान् बुद्धगुणान् प्रजानाति. [7] B C तेन शक्यं for तेनाशक्यं. [8] C तथागतस्वभावाः for तत्स्वभावाः. [9] B अवितथभाषी अनन्यभाषी. [10] B वासभूमिं गोत्रभूमिं for नामभूमिं. [11] A B अक्षरधर्मनय° for अक्षरपदप्रभेदज्ञान°. [12] C om. पदप्रभेद. [13] A om. सर्व°. [14] A om. पुनर्. [15] B पूर्वकर्म for पूर्वपरिकर्म. [16] B प्रार्थेति for प्राप्नोति. [17] B नाम उत्तमां वरां for वरां.

निष्कल्पानविकल्पान् अनोपलम्भांश्च जानाति मतिमान् । N 170
क्षयि अक्षयेऽस्य संज्ञा प्रहीण सर्वा निरवशेषा ॥ ४ ॥

न हि रूपतो दशबलान् पश्यति सो धर्मकाय नरसिंहान् ।
नापि लक्षणेहि तस्य प्रहीण सर्वे विपर्यासाः ॥ ५ ॥

धर्मा अचिन्त्य एते चिन्तापगता स्वभावउपशान्ताः । 5
एवं प्रजानमानः पश्यति बुद्धान् द्विपदश्रेष्ठान् ॥ ६ ॥

यथ [1]ज्ञात्वात्मसंज्ञास्तथैव सर्वत्र प्रेषिता बुद्धिः ।
सर्वे च तत्स्वभावा धर्म विशुद्धा[2] गगनकल्पाः ॥ ७ ॥

न हि जात मानसेऽस्य निःसरणं ज्ञात्व सर्वधर्माणाम् । N 171
त्रैधातुके विमुक्तिप्रणिधानु न विद्यते तस्य ॥ ८ ॥ 10

यथावदर्शि भोति अवितथवचनोऽनन्यथाभाषी ।
सर्वं च तस्य वचनं निश्चरति जिनानुभावेन ॥ ९ ॥

अतिक्रान्तु कामभूमिं किलेश[3]भूमिं च रूप आरूप्यान् ।
धर्मेष्वसक्तमनसः प्रमुदित चरते जगहिताय ॥ १० ॥

अतिक्रान्तु नामभूमिं घोषो ज्ञान स्वभावेन चै[4]यिकः । 15
यावच्चिरं पि भणतो न विद्यते निश्रयस्तस्य ॥ ११ ॥

संज्ञा[5]प्रचारु नास्ति दृष्टिविपर्यासु सर्वशः क्षीणः । N 172
[6]सुनिश्चिता बुद्धिश्च ते गगनोपमधीराः ॥ १२ ॥

विहार कोटीनियुता भवेयु विक्षेपणार्थ चित्तस्य ।
अभिभवति सर्वमारान् न चापि तेषां वशमुपैति ॥ १३ ॥ 20

सर्वि जह्यु मारजालं परिशुद्धः शीलवानपरिदाहः ।
ध्यानसुखस्मि निरतः प्रजानति च शून्[7]यकं लोकम् ॥ १४ ॥

लोकाश्च स्कन्ध उक्तास्तांश्चापि स शून्यकान् प्रजानति ।
अनुत्पादाननिरोधान् सर्वान् गगनोपमान् धर्मान् ॥ १५ ॥

आत्मानं स त्यजते न चैव शिक्षां श्रुतां दशबलस्य । 25 N 173
सो शीलपारमिं गत उपपद्यति यत्र [8]प्रणिधेति ॥ १६ ॥

विचरन्तु बुद्धक्षेत्रान् पश्यति बुद्धकोटीनियुतानि ।
न स्वर्गं प्रार्थयते न[9] चापि प्रणिधानतो मुक्तः ॥ १७ ॥

---

१ C om. ज्ञात्वा. २ B विशुद्धागमसत्त्वाः for विशुद्धा गगनकल्पाः. ३ C om. किलेशभूमिं. ४ A वशिकः for चयिकः. ५ In B, portion from st. 12 upto स्पर्शिता in chapter 15. 12[a] is lost on missing folios. The portion is found in A C T. ६ C अनिश्चितास्य for सुनिश्चिता. ७ C शून्यतां for शून्यकं. ८ C प्रणिदधेति. ९ C यथा for न चापि.

न भ्रंशयति स वीर्यं मुहूर्तमात्रमपि धर्म चरमाणः ।
प्रशंसितश्च भोति बुद्धभिर्दशदिशे लोके ॥ १८ ॥

तस्मात्तर्हि कुमार श्रुत्वा धर्मानिमान् समाधिस्मिन् ।
जहियान ज्ञात्रलाभं प्रकाशय महाजने धर्मम् ॥ १९ ॥

5 य इच्छति स्वयंभूर्भवेय बुद्धो महागुणसमङ्गी ।
इह शिक्षित्वा कुशलो दशबलधारी भवति बुद्धः ॥ २० ॥

इति श्रीसमाधिराजे समाध्यनुशिक्षणापरिवर्तो नाम द्वादशः ॥ १२ ॥

## समाधिनिर्देशपरिवर्तः ।

तत्र खलु भगवान् पुनरेव[1] चन्द्रप्रभं कुमारभूतमामन्त्रयते स्म—तस्मात्तर्हि कुमार बोधिसत्त्वेन महासत्त्वेन अनुत्तरां[2] सम्यक्संबोधिमभिसंबोद्धुकामेन समाधिनिर्देश[3]कुशलेन भवितव्यम्। तत्र कुमार कतमः समाधिनिर्देशः ? या यथावत्तता सर्वधर्माणां समता अविषमता। अकल्पना अविकल्पना। अविठपना असमुत्थापना। अनुत्पादः अनिरोधः[4]। कल्पविकल्पपरिकल्पसमुच्छेदः। चित्तानालम्बनता। अमनसिकारः। प्रज्ञप्तिसमुच्छेदः। वितर्कविकल्पसमुच्छेदः[5]। रागद्वेषमोहसमुच्छेदः। नान्तानन्तमनसिकारः। मनसिकारसमुच्छेदः। स्कन्धधात्वायतनस्वभावज्ञानम्। स्मृतिमतिगतिह्रीधृतिचारित्राचारगोचरप्रतिपत्तिस्थानम्। अरणाभूमिः[6]। शान्तभूमिः। सर्वप्रपञ्चसमुच्छेदः। सर्वबोधिसत्त्वशिक्षा। सर्वतथागतगोचरः। सर्वगुणपरिनिष्पत्तिः। अयमुच्यते कुमार समाधिनिर्देशः। यत्र समाधिनिर्देशे प्रतिष्ठितो बोधिसत्त्वो महासत्त्वोऽविरहितो भवति समाधिना, अभ्रान्तचित्तश्च भवति, महाकरुणासमन्वागतोऽप्रमेयाणां च सत्त्वानमर्थं करोति॥ N 174

अथ खलु भगवांस्तस्यां वेलायामिमाँ[7] गाथा अभाषत— N 175

समाध्यविषमा भूमिः शान्ता सूक्ष्मा सुदुर्दशा।
सर्वसंज्ञासमुद्घातः समाधिस्तेन चोच्यते॥ १॥

अकल्पश्चाविकल्पश्चा[8]ग्राह्यत्वमनिदर्शनम्।
अनुपलब्धिश्चित्तस्य समाधिस्तेन चोच्यते॥ २॥

समाहितो[9] यदा भोति सर्वधर्मा न मन्यते।
अमन्यना यथाभूतं समाधिरिति शब्दितः॥ ३॥

न धर्मे[10]ऽस्ति रजोमात्र रजश्चापि न विद्यते।
अनुपलब्धिर्धर्माणां समाधिस्तेन चोच्यते॥ ४॥

चित्तस्यानुपलब्धिश्च विकल्पो ह्येष चोच्यते।
अविकल्पिताश्च[11] ते धर्मा समाधिरेष जानथ॥ ५॥

शब्देन सूचितो ह्यर्थः स च शब्दो अवस्तुकः।
प्रतिश्रुत्कोपमः शब्दो अन्तरीक्षं यथा नभः॥ ६॥

अस्थिता हि इमे धर्माः स्थितिरेषां न[12] विद्यते।
अस्थितिः स्थितिशब्देन स्वभावेन न लभ्यते॥ ७॥

च्यवते अगतीत्येवं गतिश्चासौ न विद्यते। N 176
अगतिर्गतिशब्देन समाधिर्नदितस्तथा॥ ८॥

१ After पुनरेव, A reads भगवान्. २ C om. अनुत्तरां सम्यक्संबोधिमभिसंबोद्धुकामेन. ३ C om. °निर्देश°. ४ C प्रतिरोधता for अनिरोधः. ५ A T om. वितर्कविकल्पसमुच्छेदः. ६ A om. अरणाभूमिः शान्तभूमिः. ७ A इमां गाथां for इमा गाथा. ८ A अकल्पना विकल्पश्चा° for अकल्पश्चाविकल्पश्चा°. ९ A om. st. 3 and 4. १० C damaged; our text is reconstructed from T. ११ C अविकल्पित for °ल्पिताश्च. १२ C स्थितिश्चैषां न लभ्यते.

असमाहितो वुच्यति एष मन्यना
समाहितो एष द्वितीय मन्यना।
अमन्यमाना विचरन्ति बोधये
अमन्यमाना स्पृशि बोधिमुत्तमाम् ॥ ९ ॥

5 समविषम एष शान्त[1]भूमिः
शमथविपश्यनानिमित्त एषा।
सेविय इमु शान्त बुद्ध[2]बोधिं
स इह प्रयुक्तु समाधिभावनायाम् ॥ १० ॥

न च पुनरियमक्षरेहि शक्यं
10 प्रविशितु अर्थगति प्रवेशे।
सर्वरुत जहित्व भाष्य[3]घोषं
भवति समाहित नो च मन्यनास्य ॥ ११ ॥

यश्च इह समाधि बोधिसत्त्वो
यथउपदिष्टु तथा स्थिहेत युक्तः।
N 177 15 सचेदिह भवि कल्पदाहु क्षेत्रे
गिरिवरमध्यगतं न तं दहेऽग्निः ॥ १२ ॥

यथ गगनु न जातु दग्धपूर्वं
सुबहुकल्पशतेहि दह्यमानम्।
गगनसमा अधिजानमान धर्मा-
20 स्ते न जातु दह्य[4]ति सोऽग्निमध्ये ॥ १३ ॥

सचि पुन ज्वलमान बुद्धक्षेत्रे
प्रणिधि करोति समाधिये स्थिहित्वा।
ज्वलनु अयु प्रशाम्यतामशेषं
पृथिवी विनश्यि न चास्य अन्यथात्वम् ॥ १४ ॥

25 ऋद्धिबलु अनन्तु तस्य भोति
खगपथि गच्छति सो असज्जमानः।
इमि गुण अनुभोति बोधिसत्त्वो
यथअनुशिष्टु समाधिये स्थिहित्वा ॥ १५ ॥

जायते च्यवते वापि न च जाति न च्युतिः।
30 य[5]स्य विजानना एषा समाध्यस्य न दुर्लभा ॥ १६ ॥

---

१ T बुद्धभूमिं for शान्तभूमिः. २ C बुद्धगोत्रं for °बोधिं. ३ C भाष्ययोगं. ४ After दह्यति, C adds जातु. ५ A अस्या for यस्य.

न च्युतिर्नापि चो जाति लोकनाथेन देशिता ।
लोकनाथं विदित्वैवं समाधिं तेन जानथ[1] ॥ १७ ॥
अनोपलिप्ता लोकेन लोकधर्मे न सज्जति ।
असज्जमानः कायेन बुद्धक्षेत्राणि गच्छति ॥ १८ ॥
क्षेत्रेषु पश्यते नित्यं संबुद्धान् लोकनायकान् ।　　5　N 178
धर्मं च शृणुते तत्र बुद्धक्षेत्रेषु[2] भाषितम् ॥ १९ ॥
न जातु[3] तस्य अज्ञानं धर्मधातुं च भाषते ।
गतिज्ञः सततो धर्मे धर्मधातुमयो हि सः ॥ २० ॥
भाषतः कल्पकोट्योऽपि प्रतिभानं न हीयते ।
निर्मिणोति बहूनन्यान् बोधिसत्त्वान् विचक्षणः ॥ २१ ॥　　10
क्षेत्रातः क्षेत्र गच्छन्ति बोधिसत्त्वान निर्मिताः ।
सहस्रपत्रपद्मेषु पर्यङ्केन निषण्णकाः ॥ २२ ॥
बुद्धबोधिं प्रकाशेन्ति धारणीसूत्रशोभनम् ।
अन्याश्च सूत्रकोटीयो समाधिं शान्त भावयन् ॥ २३ ॥
अविवर्तिकपथे स्थापेन्ति[4] बहून् सत्त्वानचिन्तियान् ।　　15
प्रतिभानं क्षयं नैति बुद्धबोधिं प्रकाशिय ॥ २४ ॥
कूटागारे हि गच्छन्ति रतनेहि विचित्रिते[5] ।
ओकिरन्ति[6] च पुष्पेहि गन्धवद्भिर्विनायकम् ॥ २५ ॥
ओकिरन्ति च चूर्णेहि गन्धवन्तेहि नायकम् ।
कुर्वन्ति विपुलां पूजां सर्वे ते बोधिकारणात् ॥ २६ ॥　　20
अप्रमेया गुणा एते बोधिसत्त्वान तायिनाम्[7] ।
निष्क्लिेशा यदा भोन्ति तदा ऋद्धिं लभन्ति ते ॥ २७ ॥
अनुपत्तिकिलेशान अच्छाः शुद्धाः प्रभास्वराः ।　　N 179
असंस्कृता अकोप्याश्च बोधिसत्त्वान गोचराः ॥ २८ ॥
प्रशान्ता उपशान्ताश्च निष्क्लिेशा अनङ्गनाः ।　　25
अप्रपञ्चा निष्प्रपञ्चाः प्रपञ्चसमतिक्रमाः ॥ २९ ॥
अप्रचारोऽक्षराणां च सर्वधर्माण लक्षणम् ।
दुर्विज्ञेयश्च घोषेण समाधिस्तेन चोच्यते ॥ ३० ॥
अक्षया उपशान्ता च अनाभोगा अदर्शना ।
गोचरः सर्वबुद्धानां भूतकोटिरनाविला ॥ ३१ ॥　　30

---

१ C जानति for जानथ. २ C बुद्धैः क्षेत्रेषु. ३ C तस्य चित्त for जातु तस्य. ४ C अविवर्तिकत्वे स्थाप्येन्ति. ५ C विचित्रितैः. ६ A om. this line. ७ C भाषिणाम् for तायिनाम्.

सर्वबुद्धानियं शिक्षा सर्वधर्मस्वभावता ।
इह शिक्षित्व संबुद्धा गुणानां पारमिं गताः ॥ ३२ ॥
न संपारं न[1] वापारं पूर्वान्तो न विकल्पितः ।
तेन ते सर्व संबुद्धा गुणानां पारमिं गताः ॥ ३३ ॥
5 अनागतानगतिकान् धर्मान् ज्ञात्वा स्वभावतः ।
निष्प्रपञ्चाननाभोगांस्तत्र ते पारमिं गताः ॥ ३४ ॥

इति श्रीसमाधिराजे समाधिनिर्देशपरिवर्तस्त्रयोदशः ॥ १३ ॥

---

१ C व पारं वा for न वापारं.

## १४

## स्मितसंदर्शनपरिवर्तः ।

अथ खलु[1] चन्द्रप्रभः कुमारभूत उत्थायासनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्—आश्चर्यं भगवन् यावत् सुभावितेयं भगवता तथागतेनार्हता सम्यक्संबुद्धेन सर्वधर्मस्वभावसमता सर्वबोधिसत्त्वशिक्षा-समाधिनिर्देशः । यथापि नाम भगवन् दीर्घरात्रमत्र शिक्षित्वा समुदागतोऽनुत्तरायां सम्यक्संबोधौ । प्रतिभाति च मे भगवन्, प्रतिभाति च मे सुगत । भगवानाह—प्रतिभातु ते कुमार यस्येदानीं कालं मन्यसे । अथ खलु चन्द्रप्रभः कुमारभूतो भगवता कृतावकाशो भगवन्तं संमुखं सारूप्याभिर्गाथाभिरभ्यष्टावीत्—

दृष्ट्वान सत्त्वान् दुखितानुपद्रुतान्
  रागेण दोषेण सदाभिभूतान् ।
चित्तं त्वयोत्पादितु बोधिकारणाद्
  बुद्धो भवेयं ति प्रजान मोचकः ॥ १ ॥

चीर्णोऽसि वीर्ये बहुकल्पकोटियो
  दाने दमे संयमि नित्यु[3] शिक्षितः ।
शीले च क्षान्तौ तथ वीर्येऽतन्द्रितो
  दानं च दत्तं विपुलमनन्तकम् ॥ २ ॥

न चो तव मानसु जातु खिन्नं
  हस्तांश्च पादांस्त्यजमानु जीवितम् ।
हिरण्यसुवर्णं तथ पुत्रदारं
  राज्यं च त्यक्तमनपेक्ष भूत्वा ॥ ३ ॥

शीलं तवा[4]च्छं वि[5]मलं विशुद्धम्
  आत्मा च त्यक्तो न च शील खण्डितम् ।
कायेन वाचा मनसा सुसंवृता
  सुदान्तचित्ता सुगता नमोऽस्तु ते ॥ ४ ॥

क्षान्तीरताः क्षा[6]न्तिपथे प्रतिष्ठिताः
  काये कृते खण्ड पि नैव क्रुध्यसे ।
क्षीरं ततः प्रस्रवि मैत्रभावना
  आश्चर्यभूता सुगता नमोऽस्तु ते ॥ ५ ॥

---

* B missing for the whole chapter. १ After खलु, A adds भगवान्. २ C om. from उत्थाया° upto प्रणम्य. ३ C नित्युपस्थितः for °नित्यु शिक्षितः. ४ C सदाच्छं for तवाच्छं. ५ C विपुलं. ६ C क्षान्तिबले for °पथे.

बलैरुपेता दशभिर्बलैः स्थिता
असङ्गज्ञानी विदि सर्वधर्मान्।
करुणानि लोकहितकर धर्मस्वामिन्
अनुकम्पसे प्रजा इमे[1] अर्थकामः ॥ ६ ॥

N 182 शून्यं ति ज्ञानं न च पुनिहास्ति सत्त्वो
लोकं च दृष्ट्वा[2] तथा ति प्रनष्टमार्गम्।
विबोधितास्ते प्रकृतिनिरात्मधर्मे
विमुक्तिजाता न च क्वचि सा विमुक्तिः ॥ ७ ॥

प्रत्यादिशं जहिय सदा प्रमत्तं
जित्वा[3] च मारं सबलमनन्तसैन्यम्।
बुद्धित्व बोधि विपुलामनन्तज्ञानं
दिशेहि धर्मं परम विशुद्धशान्तम् ॥ ८ ॥

गगनं पतेय्या सह शशितारकेहि
पृथिवी विनश्येत् सनगरशैलसंस्था।
आकाशधातुरपि च सियान्यथात्वं
नो चैव तुभ्यं वितथ भणेय्यं[4] वाचा ॥ ९ ॥

दृष्ट्वा त्वं दुःखितान् सत्त्वानुपलम्भरता[5]ः प्रजाः।
अनोपलम्भं देशेसि गम्भीरां शान्तशून्यताम् ॥ १० ॥

शिक्षितोऽसि महावीर कल्पकोटीरचिन्तिया।
अनोपलम्भशिक्षायां स्खलितं ते न विद्यते ॥ ११ ॥

यादृशे शिक्षितो धर्मे तादृशं धर्मु भाषसे।
अभूमिरत्र बालानां यावन्त अन्यतीर्थिकाः ॥ १२ ॥

N 183 ये स्थिता आत्मसंज्ञायां ते स्खलन्ति अविद्वसु।
ज्ञात्वा[6] धर्माण नैरात्म्यं स्खलितं ते न विद्यते ॥ १३ ॥

भूतवादी महावीर भूतधर्मप्रतिष्ठितः।
भूते सत्ये स्थितो नाथ भूतां वाचं प्रभाषसे ॥ १४ ॥

भूता ते चारिका आसीद् यथा ते प्रणिधिः कृतः।
तस्य भूतस्य निष्यन्दा भूतां वाचं प्रभाषसे ॥ १५ ॥

भूतचर्यासु संपन्नो भूतकोटीसुशिक्षिता।
भूताशया भूतचरी भूतप्रज्ञ नमोऽस्तु ते ॥ १६ ॥

---

१ A इमु for इम. २ A om. दृष्ट्व तथा. ३ C ज्ञात्वा उदारं for जित्वा च मारं. ४ C भवेय for भणेय्य. ५ A °रतान् सदा for °रताः प्रजाः. ६ C श्रुत्वा धर्मा निरात्मानः for ज्ञात्वा धर्माण नैरात्म्यं.

समस्ते प्रज्ञया नास्ति ज्ञानवादि प्रभाकर ।
ज्ञाने विशेषतां प्राप्त ज्ञानवादि नमोऽस्तु ते ॥ १७ ॥
मित्रस्त्वं सर्वसत्त्वानां मैत्री तव सुभाविता ।
अप्रकम्प्यो यथा मेरुरचलः सुप्रतिष्ठितः ॥ १८ ॥
गणे सुविपुले[1] शास्तुर्गणान् संपरिकर्षसि । 5
गभीरप्रज्ञा सुगता नदसे परिषद्गता ॥ १९ ॥
सिंहनादं नदि बुद्धः सिंहविक्रान्तविक्रमः ।
जितास्ते तीर्थिकाः सर्वे सिंहेन क्रोष्टुका यथा ॥ २० ॥
अदान्तदमको वीर अदान्ता दमितास्त्वया ।
ते च मित्रा दृढा भोन्ति अभेद्या भोन्ति सुस्थिताः ॥ २१ ॥ 10
दृष्ट्वा त्वं दुःखितान् सत्त्वानात्मदृष्टिसमाश्रितान्[2] । N 184
नैरात्म्य धर्मं देशेसि यत्र नास्ति प्रियाप्रियम् ॥ २२ ॥
अशिक्षितानां बालानां कुमार्गपथचारिणाम् ।
मार्गं त्वं संप्रकाशेसि येन गच्छन्ति नायकाः ॥ २३ ॥
ये स्थिता आत्मसंज्ञायां दुःखे ते सुप्रतिष्ठिताः । 15
न ते जानन्ति नैरात्म्यं यत्र दुःखं न विद्यते ॥ २४ ॥
अखिलितपदधर्मदेशकोऽसि[3]
स्खलितु न लभ्यति लोकनाथ ।
अवितथ गिर संप्रभाषसे त्वं
दुःखमोक्षकरा नमस्ते नाथ ॥ २५ ॥ 20
बहुनियुतशता सहस्रकोट्यो
गगनस्थिताः पृथु देवनागयक्षाः ।
सर्वि स्पृह जनेन्ति नायकस्मिन्
भगवतु वाच श्रुणित्व अर्थयुक्ताम् ॥ २६ ॥
स्निग्धमृदुमनोज्ञकालयुक्तां 25
सुमधुर वाच प्रणीत प्रेमणीयाम् ।
अपरिमितस्वराङ्गसंप्रयुक्तां
हितकर मोक्षकरीं बहुजनस्य ॥ २७ ॥
तुरियशतसहस्र अप्रमेया N 185
सुमधुर युक्त भवेयुरेककाले[4] । 30

---

१ A गगने विपुले for गणे सुविपुले. २ C सर्वान् for सत्त्वान्. ३ A अस्खलिते पदे धर्मे देशकोऽसि for the line. ४ A भणेयुः for भवेयुः.

दिव्यस्वर विशिष्ट प्रेमणीया
अभिभवति सुगतस्य एकवाचा ॥ २८ ॥

द्विजगणकलविङ्कमञ्जुघोषाः[१]
सुरुचिर प्रेमणीयाः सुगीतशब्दाः।
5 शङ्खपटहभेरिवीणशब्दाः[२]
कलमपि न[३] लभन्ति बुद्धशब्दे ॥ २९ ॥

परभृतशुकशारिकाण शब्दा-
स्तथ पुनः क्रौञ्चमयूरकिन्नराणाम्।
रुत रवित य केचि प्रेमणीयाः
10 कलमपि बुद्धस्वरस्य नानुभोन्ति ॥ ३० ॥

प्रिय मधुर मनोज्ञ प्रेमणीयाः
सुमधुर शान्तगिरा प्रशंसनीयाः।
सर्वि गिर प्रयुक्त एककाले
गिरवर हर्षणियास्तथागतस्य ॥ ३१ ॥

15 सुरमनुजनरेन्द्रदानवानां
सकलभवे त्रिभवे य अस्ति सत्त्वाः।
N 186 या प्रभा अभवत् प्रभाकराणां
अभिभवति सुगतस्य एकरश्मिः ॥ ३२ ॥

कुसुमितु सुगतस्य आत्मभावः
20 परिवृतु विचित्रु[४] सर्वलक्षणैः।
पुण्यशतनिर्वृतु अच्छ शुद्धः
प्रतपति सर्वजगे जिनस्य कायः ॥ ३३ ॥

शङ्खान शब्द पणवसुघोषकाणां
भेरीण शब्द तथपि च क्रिम्पलानाम्।
25 सर्वे च शब्द सुमधुर प्रेमणीया
बुद्धस्य शब्दे शतिम कलां न भोन्ति ॥ ३४ ॥

तूर्याण कोटिनियुतसहस्रशब्दा
आस्वादनीय सुमधुर दिव्यकल्पाः।
प्रामोदनीय मरुगणअप्सराणां
30 बुद्धस्य शब्दे शतिम कलां न भोन्ति ॥ ३५ ॥

१ T °कोकिल° for °कलविङ्क°. २ After शब्दाः, C adds: अचिरप्रेमणियाः स्वराः कुणालाः सर्वे द्विजगण करोन्ति शब्दं. ३ C नानुभोन्ति for न लभन्ते. ४ C चित्रितु for विचित्रु.

क्रौञ्चा मयूर परभृत चक्रवाका
हंसाः कुणाला बहुविधपक्षिसंघाः ।
ये ते सशब्दाः सुमधुर एककाले
बुद्धस्य शब्दे शतिम कलां न भोन्ति ॥ ३६ ॥
नागान यक्षाण असुरमहोरगाणां 5 N 187
देवेन्द्रब्रह्ममरुपतीनां च शब्दाः ।
यावन्त शब्दास्त्रिभवे मनोज्ञ कान्ता
बुद्धस्वरस्य कलमपि ते न भोन्ति ॥ ३७ ॥
या ब्रह्मणो वा मेरुपतिनश्च[1] आभा
प्रभास्वराणां मणिरतनान आभाः । 10
सर्वा य आभा विविधमनेकरूपाः
सर्वास्त एका अभिभवि बुद्धरश्मिः ॥ ३८ ॥
कायेन शुद्धो वचसा मनेन चैव
ज्ञानेन शुद्धस्त्रिभवि अनोपलिप्तः ।
गुणसारराशि गुणरतनो नरेन्द्रः 15
सर्वगुणेहि असमसमः स्वयंभूः ॥ ३९ ॥
एवं स्तवित्वा दशबल सत्यवादिं
वाचं प्रभाषि मुदितमनः कुमारः ।
पूजित्व बुद्धमतुलियमप्रमेयं
बुद्धो भवेय यथ इव शाक्यसिंहः ॥ ४० ॥ 20
तस्यो विदित्वा सुगतु[2] विशिष्ट चर्या- N 188
मसङ्गज्ञानी स्मितमकरोन्नरेन्द्रः ।
मैत्रेयु पृच्छी दशबलज्येष्ठपुत्रं
कस्यार्थि एतं स्मितु कृतु नायकेन ॥ ४१ ॥
आकम्पिताभूद्वसुमति षड्विकारं 25
देवाश्च नाग गगनस्थिता उदग्राः ।
प्रेक्षन्ति बुद्धं प्रमुदित हृष्टचित्ता-
स्तं व्याकरोहि सुगत अनाभिभूतः ॥ ४२ ॥
अभूमिरस्मि भगवतु[3] श्रावकाणां
यत्र प्रवृत्तं पुरुषवरस्य ज्ञानम् । 30
सुविशुद्धज्ञानिन्ननुपमप्रज्ञभूमि
अखिला ते स्मितु कृतु जिन कस्य अर्थे ॥ ४३ ॥

---

१ A मरुपतीनां च for ०पतिनश्च. २ C सुगतुमनन्तचर्या. ३ C भवतु for भगवतु.

पृच्छमि दशबलं विनायकं
    शाक्यसिंह द्विपदानमुत्तमम्।
ज्ञानपारमिं गतं प्रभाकरं
    रागद्वेषखिलमोहसादकम् ॥ ४४ ॥
कल्पकोटि चरितोऽसि नायको
    गङ्गवालुकसमास्ततोत्तरम्।
N 189
एषमाणु वरबोधिमुत्तमां
    कस्य अर्थि स्मितु एतु दर्शितम् ॥ ४५ ॥
हस्त-पाद परित्यक्त[1] शास्तुना
    पुत्रदार प्रियज्ञाति बान्धवान्।
एषमाणु वरज्ञानमुत्तमं
    को नु हेतु स्मितदर्शनि मुने ॥ ४६ ॥
अश्वहस्तिरथपत्तियो त्वया
    दासदासिमणिरत्न[2]रूप्यकम्।
नैव द्रव्यरतनं च लभ्यते
    यन्न त्यक्तु चरता ति चारिकाम् ॥ ४७ ॥
ज्ञानु श्रेष्ठु त्रिभवेऽतिवर्तते
    सर्वसत्त्वचरियां प्रजानसे।
धातुचित्तु अधिमुक्तिकोविदा
    कस्य अर्थि स्मितु[3] एतु दर्शितम् ॥ ४८ ॥
केन पूजित नराणमुत्तमाः
    कस्य वार्थ[4] विपुलो भविष्यति।
N 190
को च अस्य चरियाय ग्राहकः
    कस्य अर्थि स्मितु दर्शितं मुने ॥ ४९ ॥
षड्विकार पृथिवी प्रकम्पिता
    पद्मकोट्य धरणीतु उत्थिताः।
कोटिपत्रपरमा प्रभास्वरा
    हेमवर्णरुचिरा मनोरमा ॥ ५० ॥
यत्रिमे स्थित जिनस्य औरसा
    बोधिसत्त्व परमा महर्द्धिकाः।
धर्मभाणक बहू समागता-
    स्तेष कारुणिक पृच्छि नायकम् ॥ ५१ ॥

---

१ A परित्यक्तु. २ A °मणिमुक्ति° for °मणिरत्न°. ३ C स्मितमेतु. ४ A अर्थु for वार्थ.

मेरिशङ्खतुणवाः सुघोषका-
स्तूर्य कोटिनियुता: प्रवादिताः ।
तेष शब्द गगनस्मि[1] श्रूयते
यादृशः सुगतघोष अचिन्तियः ॥ ५२ ॥

हंसक्रौञ्चकलविङ्ककोकिलाः　　5
पक्षिसंघ बहुकाः समागताः ।
मुञ्चि घोष परमं प्रभास्वरं
बुद्धघोषकल नानुभोन्ति ते ॥ ५३ ॥

केन दान दम संयमः पुरे
कल्पकोटि बहुका निषेविताः ।　　10
केन पूजित नराण उत्तमा　　N 191
कस्य अर्थि स्मितु[2] एतु दर्शितम् ॥ ५४ ॥

केन पूर्वि द्विपदेन्द्र पृच्छितो
गौरवं परमु संजनित्वन ।
बुद्धबोधि कथमेष लभ्यते　　15
कस्य अर्थि स्मितु एतु दर्शितम् ॥ ५५ ॥

यात्तिका दशबला अतीतकाः
प्रत्युत्पन्न सुगता अनागताः ।
सर्व जानसि नराणमुत्तमो
तेन पृच्छमि प्रजाय कारणात् ॥ ५६ ॥　　20

चित्तसंतति प्रजाय जानते
सर्वि प्राणिन अनन्तगोचराः ।
यस्य यादृशु नरस्य आशय-
स्तेन पृच्छमि नराणमुत्तमम् ॥ ५७ ॥

ये चरन्ति चरियामनुत्तमां[3]　　25
हेतुयुक्तिविनयस्मि कोविदाः ।
बुद्धज्ञान कथमेतु लभ्यते
एतदर्थि द्विपदेन्द्र पृच्छिहम् ॥ ५८ ॥

ये हि धर्म सुखुमाः सुदुर्दृशाः　　N 192
शून्य शान्त अतुला अचिन्तियाः ।　　30
भाविता दशबलान गोचरा-
स्तेष अर्थ अहु पृच्छि नायकम्[4] ॥ ५९ ॥

१ C गगने हि for गगनस्मि. २ C स्मितमेतु almost everywhere. ३ A चरियाणमुत्तमां for चरियामनुत्तमां. ४ C कारणम् for नायकम्.

येष मैत्रि करुणा सुभाविता
सर्वप्राणिषु जगे अचिन्तिया ।
सत्त्वसंज्ञ न च येष वर्तते
तेष अर्थि द्विपदेन्द्रु पृच्छियाम् ॥ ६० ॥

5 येष ज्ञानमतुलमचिन्तियं
तेष ग्राह्य न कदाचि विद्यते[1] ।
चित्तगोचरिय पारमिं गता
तेष अर्थि अह्नु नाथ पृच्छमि ॥ ६१ ॥

शीलज्ञानगुणपारमिं गता
10 त्र्यध्वज्ञानमतुलं भिवर्तते ।
नैव तुभ्य स्खलितूपलभ्यते
कस्य अर्थि स्मितु एतु दर्शितम् ॥ ६२ ॥

शारिपुत्र अनिरुद्ध कोलिता
ये च अन्य सुगतस्य श्रावकाः ।
N 193 15 नैव[2] तेष इह ज्ञानु वर्तते
बुद्धगोचरु अयं निरुत्तरः ॥ ६३ ॥

सर्वधर्मवशिपारमिं गताः
सर्वशिक्ष-चरियाय उद्गताः
संजनेत्व[3] करुणां विनायका
20 मुञ्च घोष परमार्थकोविदा ॥ ६४ ॥

[4]येऽपि पूर्व बहुकल्पकोटियो
एव चिन्ति द्विपदेन्द्रु पृच्छितः ।
भष्यमग्रु शरणं परायणं
तेष अद्य फल ब्रूहि नायका ॥ ६५ ॥

25 यक्षराक्षसकुम्भाण्डगुह्यकाः
प्रेक्षमाण द्विपदानमुत्तमम् ।
सर्वि प्राञ्जलिस्थिताः सगौरवाः
श्रोतु व्याकरणमग्रपुद्गलान् ॥ ६६ ॥

बोधिसत्त्व बहवोऽद्य आगता
30 ऋद्धिमन्त बहुक्षेत्रकोटिभिः ।

---

१ C लभ्यते for विद्यते. २ C नैष for नैव. ३ C संजनेतु for ° नेत्व. ४ A येहि for येऽपि.

जेष्ठपुत्र[1] सुगतस्य औरसाः
    सर्वि प्राञ्जलिस्थिताः सगौरवाः ॥ ६७ ॥

N 194

गन्धहस्ति पुरिमादिशा गतो-
    ऽक्षोभ्यक्षेत्र दिशि लोकविश्रुतः ।
बोधिसत्त्व[2]नयुतैः पुरस्कृतः
    शाक्यसिंहु द्विपदेन्द्रु पृच्छना ॥ ६८ ॥

सुखावतीय वरलोकधातुतो
    महास्थाम प्राप्त अवलोकितेश्वरः ।
बोधिसत्त्वनयुतैः पुरस्कृतः
    शाक्यसिंहु द्विपदेन्द्रु पृच्छना ॥ ६९ ॥

येन पूर्व वहुकल्पकोटियो
    अप्रमेय सुगता उपस्थिताः ।
सागराण सकला च वालिका
    एषता परम ज्ञानमुत्तमम् ॥ ७० ॥

सर्वबुद्धस्तुत संप्रशंसितः
    सर्वधर्मगुणपारमिं गतः ।
सर्वलोकदिशतासु विश्रुतो
    मञ्जुघोष स्थितु प्राञ्जलीकृतः ॥ ७१ ॥

बुद्धक्षेत्रनियुतैश्चरित्वना
    सुदुर्लभमीदृशकान दर्शनम् ।
बुद्धपुत्रगुणवत् सुशिक्षिताः
    सर्वि प्राञ्जलिस्थिताः सगौरवाः ॥ ७२ ॥

नास्ति अन्य इह कश्चि भाजनं

N 195

    एवरूपि यथ एत[3] सूरताः ।
धर्मकोषधर सर्वशास्तुनां
    स्निग्ध[4]भाव गिर मुञ्च नायका ॥ ७३ ॥

न ह्यकारणक जिना विनायका
    दर्शयन्ति स्मितमग्रपुद्गलाः ।
मुञ्च घोषवर दुन्दुभिस्वर
    कस्य अर्थि स्मितु एतु दर्शितम् ॥ ७४ ॥

---

१ C °दृष्ट for °पुत्र. २ A om. this line. ३ A C एति सूरता for एत सूरताः. ४ A स्निग्धवाच for °भाव.

हंसकोकिलमयूरसारसा
मेघनाद वृषभाः प्रगर्जिताः ।
दिव्यवाद्यमधुराः प्रवादिता
व्याकरोहि गिर सत्त्वमोचनी ॥ ७५ ॥

5 मैत्रसंजननि प्रेम[1]वर्धनी
ज्ञानदर्शनि अविद्य[2]रिञ्जनी ।
अर्थतीरणि प्रज्ञाविवर्धनी
कल्पकोटिनियुता विशोधनी ॥ ७६ ॥

N 196 विनिश्चितभावविभावित-
10 दुःखनिरोधपदार्थनिदर्शनी ।
सर्वकुतीर्थकवादध्वंसनी
शून्य निसत्त्व निजीव विभावनि ॥ ७७ ॥

पुण्यसहस्रशतेहि अलंकृतः
बुद्धसहस्रशतेहि चरित्विह ।
15 देवसहस्रशतेहि सुसंस्तुतः
ब्रह्मसहस्रशतेहि नमस्कृतः ॥ ७८ ॥

राक्षसयक्षकुम्भाण्डप्रसादनि
नागसुपर्णमहोरगमोचनि ।
नित्यमसक्त-प्रयुक्त-उ[3]दीरणि
20 कर्मफलेहि शुभेहि समुद्गतः ॥ ७९ ॥

ये च केचि जिनाः परिनिर्वृता
ये च अनागत ये च अवस्थिताः ।
सर्वि प्रजानसि सङ्गु न तेऽस्तीति
सर्वगुणेहि समुद्गत नायक ॥ ८० ॥

N 197 25 भूतधरा ससमुद्रपर्वत
सर्वि मही षड्विकार प्रकम्पिता ।
देवगणा नभि पुष्प क्षिपन्ति च
दिव्यु प्रवायति गन्धु मनोरमु ॥ ८१ ॥

हतरागदोषतिमिरा निखिला
30 परिशुद्धशील परिशुद्धमनाः ।

१ C प्रीतिवर्धनी for प्रेम°. २ A अविद्यरजिनी. ३ C उदीरित for उदीरणि.

प्रशान्त शून्य अनिमित्तरता
[1]नरसिंहनादु नद कारुणिका ॥ ८२ ॥
प्रतिभानवन्त सुविशालयशा
सुसमाप्तप्रज्ञ तथज्ञान जिना ।
[2]तत्र लोकि नास्ति समु कारुणिका 5
भण कस्यु अर्थि स्मितु दर्शयसे ॥ ८३ ॥
कलविङ्ककोकिलमयूररवा-
स्तथ जीवंजीवं जीवकमनोज्ञरुताः ।
रञ्जनीय शब्दु भुवि एकक्षणे
कल तेन भोन्ति सुगतस्य स्वरे ॥ ८४ ॥ 10
भेर्यो मृदङ्गपणवाश्च तथा
शङ्ख सवेणु तथ वल्लरियो ।
तूर्यासहस्र सिय एकरवाः N 198
कल नानुभोन्ति सुगतस्य रुते ॥ ८५ ॥
तूर्यसहस्र वर दिव्यरुता 15
रञ्जनीय गीत सिय अप्सरसाम् ।
सुगीति शब्दरति संजने
कल न भोन्ति सुगतस्य रुते ॥ ८६ ॥
एकस्वरा तु तत्र लोकहिता
नानाधिमुक्ति स्वरु निश्चरति । 20
एकैकु मन्यि मम भाषि जिनो
ब्रूहि स्मितं ति कृतु कस्य कृते ॥ ८७ ॥
देवान शब्द तथ नागरुता
ये चापि किन्नररुता मधुराः ।
प्रशमेन्ति क्लेश न कदाचिदपि 25
बुद्धस्वरास्तु सद क्लेशनुदाः ॥ ८८ ॥
प्रीतिं जनेति न च रागरतिं
मैत्रीं जनेति न च दोषमतिम् ।
प्रज्ञां जनेति न च मोहरतिं
बुद्धान सर्व मलनाशि स्वरः ॥ ८९ ॥ 30
न बहि च शब्दु परिषातु प्रजा N 199
सर्वेष छिन्दति स काङ्क्षशतान् ।

---

१ A नद सिंहनादु वर कारुणिका for the line. २ A न तत्रास्ति लोकि for तत्र लोकि नास्ति.

न च ओनतो न हि च औन्नमतो
समसौख्यदर्शन स्वरो मुनिनः ॥ ९० ॥
भज्यादियं मही सशैलरणा
क्षीयते सागरजलं च तथा।
5 चन्द्रोऽथ सूर्यु धरणीं प्रपतेद्
गिरमन्यथा न पुन भाषि जिनः ॥ ९१ ॥
सर्वाङ्गवाक्य परिशुद्धगिरा
सिंहस्वरा मधुरमञ्जगिरा।
ब्रह्मस्वरा सुगत कारुणिका
10 भण कस्य अर्थि स्मितु दर्शयसे ॥ ९२ ॥
यावन्त सत्त्व इह सर्व जगे
सर्वेष चित्त चरते कुशलः।
ये अतीतनागत ये सांप्रतिका
भण कस्य अर्थि स्मितु दर्शयसे ॥ ९३ ॥
N 200 15 यावन्त केचिज्जिन कारुणिका
ज्ञानस्मि सर्वि वशि पारमिं गताः।
न च ते जिना विमलचन्द्रमुखा
नाहैतुकं[१] स्मित सद दर्शयसे ॥ ९४ ॥
अपि कल्पकोटि भणि अप्रतिमा
20 यथ गङ्गवालिक भणेय्य गुणान्।
न च शक्यु कीर्तितु प्रमाण गुणे
भण कस्य अर्थि स्मितु दर्शयसे ॥ ९५ ॥

इति श्रीसमाधिराजे स्मितसंदर्शनपरिवर्तश्चतुर्दशः ॥ १४ ॥

---

१ C अहैतुकं स्मितकरो for नाहैतुकं स्मित सद.

# १५

## स्मितव्याकरणपरिवर्तः ।

अथ खलु भगवांस्तस्यां वेलायां मैत्रेयं बोधिसत्त्वं महासत्त्वमाभिः सारूप्याभिर्गाथाभिः प्रत्यभाषत — N 201

चन्द्रप्रभो एष कुमारभूतः
संस्तुत्य बुद्धमतुलीय प्रीतिया ।
भाषित्व बुद्धान विशिष्ट वर्णं 5
प्रशंसनीयः सद कालि भेष्यति ॥ १ ॥

इहैव चो राजगृहस्मि पूर्वं
दृष्टैव बुद्धान सहस्रकोटयः ।
सर्वेष चानेन जिनान अन्तिके
अयं वरः शान्तसमाधि पृच्छितः ॥ २ ॥ 10

सर्वत्र चो एष ममासि पुत्रो
इमां चरन्तो वरबोधिचारिकाम् ।
सर्वत्र चासीत् प्रतिभानवन्तः
सर्वत्र चासीत् सद ब्रह्मचारी ॥ ३ ॥

स पश्चिमे कालि महाभयानके 15
त्वमेव साक्षी अजिता ममात्र ।
स्थिहित्व शुद्धे सद ब्रह्मचर्ये N 202
वैस्तारिकं एष समाधि काहिते ॥ ४ ॥

समाधिमेषन्तु इदं प्रणीतं
एतेन मार्गेण स बोधि लप्स्यते । 20
परिगृहीतो बहुबुद्धकोटिभिः
पूजां वरां काहिति नायकानाम् ॥ ५ ॥

ज्ञाने स्थिहित्वा अहु व्याकरोमि
चन्द्रप्रभस्याचरितं विशिष्टम् ।
न पश्चकालेऽस्य भवेऽन्तरायो 25
न ब्रह्मचर्यस्य न जीवितस्य ॥ ६ ॥

हस्ते यथा आमलकानि पञ्च
प्रजानाति बुद्धसहस्रकोटयः ।

---

* B is missing upto st 12[a]. १ A reads तस्यां वेलायां after महासत्त्वं. २ A ममास्ति for °सि. ३ C अजिनाममात्रः. ४ C तद for सद. ५ C समाधि for स बोधि.

तदुत्तरे यात्तिक गङ्गवालिका
अनागता येष्विय पूजना होति ॥ ७ ॥
देवान नागान अशीतिकोट्यः
यक्षाण चो कोटिसहस्र सप्ततिः ।
5 औत्सुक्यमेषन्ति य पश्चकाले
पूजां करोन्ता द्विपदोत्तमानाम् ॥ ८ ॥
N 203 से पूज कृत्वा द्विपदान उत्तमान्
समुदाचरि ज्ञानमिमं निरुत्तरम् ।
स पश्चिमे चोच्छ्रयि लोकनाथो
10 विमलप्रभो नाम जिनो भविष्यति ॥ ९ ॥
इदं स्वकं व्याकरणं श्रुणित्वा
प्रीतिस्फुटो आसि कुमारभूतः ।
चन्द्रप्रभो उद्गत सप्त ताल
उदानुदानेति नभे स्थिहित्वा ॥ १० ॥
15 अहो जिना उत्तमधर्मदेशका
विमुक्तिज्ञानाधिपतीबले स्थिता ।
सुनिश्चिते उत्तमज्ञानि तिष्ठसि
अनाभिभूतोऽसि परप्रवादिभिः ॥ ११ ॥
विवर्जिता सङ्ग विमुक्ति स्पर्शिता
20 विभावितं वस्तु भवे न सज्जसि ।
N 204 प्रपञ्च सर्वे सकला न भोन्ति ते
असङ्गज्ञानं त्रिभवेऽभिवर्तते ॥ १२ ॥
सर्वप्रपञ्चेभिरनोपलिप्ता
दृष्टिः प्रपञ्चाः सकलाः प्रहीणाः ।
25 सुभाविते मार्ग निकेतु नास्ति
अनाभिभूता अविरुद्ध केनचित ॥ १३ ॥
निकेतु त्रैधातुकि नास्ति तुभ्यं
ओघाश्च ग्रन्थाश्च प्रहीण सर्वे ।
तृष्णालतावन्धन सर्वि छिन्ना
30 भव प्रहीणो भवसंधि नास्ति ॥ १४ ॥

---

१ C om. st. 9. २ A om. from उदानु° upto तिष्ठसि in 11ᶜ. ३ B resumes here. ४ C असङ्गज्ञानी for °ज्ञानं. ५ C अतिवर्तते for अभि°. ६ B अनाभिहो for अनाभिभूता. ७ B सर्वि for केनचित.

स्वभावु धर्माणमभावु जानसे[1]
　　अनोभिलप्या गिर संप्रभाषसे ।[2]
सिंहेन वा क्रोष्टुक तीर्थ[3] नाशिता
　　ये ते विपर्याससि्थता अविद्वसु ॥ १५ ॥
निधान श्रेष्ठं मयि लब्धमद्य　　　　5
　　धर्मं निधानं[4] सुगतेन देशितम् ।
प्रहीण सर्वा विनिपातु दुर्गति
　　काङ्क्षा न मेहास्ति भविष्य नायकः ॥ १६ ॥
मूर्ध्नस्मि पाणिं प्रतिस्थापयित्वा　　　　N 205
　　सुवर्णवर्णं रुचिरं प्रभास्वरम् ।　　　　10
अभिषिञ्च बोधाय नरर्षभस्तं[5]
　　सदेवकं लोक स्थपेत्व साक्षिणम् ॥ १७ ॥

इति श्रीसमाधिराजे स्मितव्याकरणपरिवर्तो नाम पञ्चदशः ॥ १५ ॥

---

१ C धर्मान सदा प्रजानसे for धर्माणमभावु जानसे. २ C अनाभिलप्यां गिर सर्वि बुध्यसे for the line. ३ B वीथि for तीर्थ. ४ B विधानं for निधानं. ५ B नरसहस्रं for नरर्षभस्तं.

## ।। पूर्वयोगपरिवर्तः ।।

N 206 स्मरामि[1] पूर्वं चरमाणु चारिकां
सिंहध्वजस्य सुगतस्य शासने ।
अभूषि भिक्षु विदु धर्मभाणको
नामेन सो उच्यति ब्रह्मदत्तः ।। १ ।।
5 अहं[2] तदासीन्मति राजपुत्रो
आबाधिको बाढ गिलान दुःखितः ।
मह्यं च सो आचरियो अभूषि
यो ब्रह्मदत्तस्तद धर्मभाणकः ।। २ ।।
पञ्चोत्तरा वैद्यशता अनूनका
10 व्याधिं चिकित्सन्ति उद्युक्तमानसाः ।
N 207 व्याधिं न शक्नन्ति मम चिकित्सितुं
सर्वे मम ज्ञातय[3] आसि दुःखिताः ।। ३ ।।
श्रुत्वा च गैलान्यु स मह्य भिक्षु
गिलानपृच्छो मम अन्तिकागतः ।
15 कृपां जनेत्वा मम ब्रह्मदत्तो
इमं समाधिं वरु तत्र देशयी ।। ४ ।।
तस्य[4] ममा एतु समाधि श्रुत्वा
उत्पन्न प्रीति अरिया निरामिषा ।
स्वभावु धर्माण प्रजानमानो
20 उच्छ्वासि व्याधी तुह्य तस्मि काले ।। ५ ।।
दीपंकरः सो चरमाणु चारिका-
मभूषि भिक्षुर्विदु धर्मभाणकः ।
अहं च आसीन्मतिराजपुत्रः
समाधिज्ञानेन हुं[5] व्याधि मोचितः ।। ६ ।।
25 तस्मात् कुमारा बहुं[6] पश्चकाले
अनुस्मरन्तो इमु पारिहाणिम् ।
सहेसि बालान दुरुक्त वाक्यं
धारेन्तु वाचेन्तु इमं समाधिम् ।। ७ ।।

---

१ Before स्मरामि, ABT read a passage given in App. I ( No. 17 ). २ A अहं च आसीन्महिराजपुत्रो for the line. ३ C ज्ञातिक for ज्ञातय. ४ B तस्मा for तस्य. ५ A हि for हु. ६ AB तुह्य for बहु.

भेष्यन्ति भिक्षु बहु पश्चकाले　　　　N 208
　　लुब्धाश्च दुष्टाश्च असंयताश्च ।
पापेच्छ अध्योषित पात्रचीवरे
　　प्रतिक्षिपिष्यन्ति इमं समाधिम् ॥ ८ ॥
ईर्ष्यालु[1]का उद्धत प्राकटेन्द्रियाः　　　　5
　　कु[2]लेषु चाध्योषित लाभकामाः ।
प्रायोगिके संस्तवि नित्य संश्रिताः
　　प्रतिक्षिपिष्यन्ति इमं समाधिम् ॥ ९ ॥
हस्तांश्च पादांश्च तथ विद्यमाना
　　हास्ये च लास्ये च सदा प्रयुक्ताः ।　　　　10
परस्परं कण्ठित श्लिष्यमाणा
　　ग्रामेषु चर्यापथि अ[3]न्यु भेष्यति ॥ १० ॥
अयुक्तयोगानिमि भोन्ति लक्षणाः
　　परकुमारीषु च नित्य ध्योषिताः ।
रूपेण र[4]क्ता ग्रथिता भवन्ति　　　　15　N 209
　　हि[5]ण्डन्ति ग्रामान्निगमांश्च राष्ट्रान् ॥ ११ ॥
ते खाद्यपेयस्मि सदा प्रयुक्ता
　　नाट्ये च गीते च तथैव वादिते ।
क्रयविक्रये चो[6] सद भोन्ति उत्सुकाः
　　पानेऽपि चाध्योषित नष्टलज्जाः ॥ १२ ॥　　　　20
लेखान पिष्यन्ति अयुक्तयोगाः
　　शीलं तथेर्यापथु छोरयित्वा ।
मर्याद भिन्दित्व गृहीभि सार्धं
　　ते भिन्नवृत्ता वितथप्रतिष्ठिताः ॥ १३ ॥
ये कर्म बुद्धेहि सदा विवर्जिता-　　　　25
　　स्तुलमानकूटे च सदा प्रयुक्ताः ।
तत्कर्म कृत्वान किलिष्टपापकान्
　　अपायु यास्यन्ति निहीनकर्माः ॥ १४ ॥
प्रभूतवित्तं मणिहेमशंखं
　　गृहाँ[7]श्च ज्ञातींश्च विहाय प्रव्रजि ।　　　　30

---

१ C ईर्ष्यामुक्ता for °लुका. २ C कुले अवाध्योषित for कुलेषु चाध्योषित. ३ B अभ्युपेष्यति for अन्यु भेष्यति. ४ A मत्ता; B सन्तो; C अक्ता for रक्ता. ५ B हिंसन्ति; C मुह्यन्ति for हिण्डन्ति. ६ A चोत्सद; B चोत्सव for चो सद. ७ C गृहं च.

N 210 ते प्रव्रजित्वानिह बुद्धशासने
पापानि कर्माणि सदा[1]चरन्ति ॥ १५ ॥
धने च धान्ये च ते सार[2]संज्ञिनो
धेनूश्च गावः शकटानि सज्जयी।
5 किमर्थ तेहि इम केश छोरिता
शिक्षाय येषां प्रतिपत्ति नास्ति ॥ १६ ॥
मया च पूर्वे चरियां चरित्वा
सुदुष्करं कल्पसहस्र चीर्णम्[3]।
अयं[4] च मे शान्त समाधिरेषितो
10 यत्तेष श्रुत्वा तद हास्यु भेष्यति ॥ १७ ॥
चिरं मृषावादि अब्रह्मचारिणो
अपाय[5]निम्नाः सद कामलाभाः।
ते ब्रह्मचारीण ध्वजं गृहीत्वा
दुःशील वक्ष्यन्ति न एष धर्मः ॥ १८ ॥
15 भेदाय स्थास्यन्ति च ते परस्परं
अयुक्तिभिर्लाभ गवेषमाणाः।
N 211 अवर्ण भाषित्व ते[6] अन्यमन्यं
च्युता गमिष्यन्ति अपायभूमिम् ॥ १९ ॥
शतःसहस्रेषु सुदुर्लभास्ते
20 क्षान्तीबलं येषु तदा भविष्यति।
अतो बहू ये कलहस्मि उत्सुकाः
प्रपञ्च काहिन्ति जहित्व क्षान्तिम् ॥ २० ॥
वक्ष्यन्ति वाचा वय बोधिसत्त्वाः
शब्दोऽपि तेषां व्रजि देशदेशे।
25 अभूतशब्देन मदेन मत्ता
विपन्नशीलान कुतोऽस्ति बोधिः ॥ २१ ॥
न मे श्रुतं नापि कदाचि दृष्ट-
मध्याशयो यस्य विशुद्ध नास्ति।
इमेषु धर्मेषु च नास्ति क्षान्तिः
30 स[7] लप्स्यते बोधि क्षिपित्व धर्मान् ॥ २२ ॥

---

१ A B समाचरन्ति for सदा°. २ A भूतसंज्ञिनो for सार°. ३ B कीर्णम् for चीर्णम्. ४ A अयं च तेषां न समाधि देशिते for the line. ५ B अपायनिष्ठाः. ६ A च for त. ७ AB प्रतिलप्स्यते for स लप्स्यते.

भीताश्च त्रस्ताश्च गृहं त्यजन्ति
ते प्रव्रजि दृढतरा[1] भवन्ति ।
विशेषकामा विलयं प्रयान्ति[2] N 212
क्षिपित्व यानं पुरुषोत्तमानाम् ॥ २३ ॥
[3]निहीनप्रज्ञा गुणविप्रहीना 5
वक्ष्यन्ति दोषं सद अग्रयाने ।
यस्मै[4] च ते तच्छरणं प्रपन्ना-
स्तत्रैव[5] ते दोषशतान् वदन्ति ॥ २४ ॥
आजीवका ये बहु प्रव्रजित्वा
अनर्थिकाः सर्वसुबुद्धबोधये । 10
ते आत्मदृष्टीय स्थिहित्व बाला
उत्त्रस्त भेष्यन्ति श्रुणित्व शून्यताम् ॥ २५ ॥
विहारु[6] कृत्वान त अन्यमन्यं
व्यापाददोषांश्च खिलं जनेत्वा[7] ।
अभ्याख्य दत्वा च परस्परेण 15
लप्स्यन्ति प्रामोद्य करित्व पापकम् ॥ २६ ॥
यः शीलवन्तो गुणवन्तु भेष्यति
मैत्रीविहारी[8] सद क्षान्तिकोविदः ।
सुसंवृतो[9] मार्दवसूरतश्च N 213
परिभूत[10] सो भेष्यति तस्मि काले ॥ २७ ॥ 20
यो खो पुनर्भेष्यति दुष्टचित्तः
सुदारुणो रौद्रतिहीनकर्मा[11] ।
अधर्मचारी कलहे रतश्च
स पूजितो भेष्यति तस्मि काले ॥ २८ ॥
आरोचयामि प्रतिवेदयामि 25
सचेत् कुमारा मम श्रद्ध गच्छसि ।
इमां स्मरित्वा सुगतानुशासनीं
मा[12] जातु विश्वस्तु भवेसि तेषाम् ॥ २९ ॥
ते[13] तीव्ररागास्तथ तीव्रदोषा-
स्ते तीव्रमोहाः सद मानमत्ताः । 30

---

१ A गाढतरा for दृढ॰. २ AB व्रजन्ति for प्रयान्ति. ३ C om. st.24. ४ A यस्यैव for यस्मै च. ५. A तस्यैव for तत्रैव. ६ A B विवाद; C विचारु for विहारु. ७ C जनेभ्यः for जनित्वा. ८ C मैत्राविहारी. ९ C असंवृतो for सु॰. १० B परिभुक्त for ॰भूत. ११ A ॰विहीनकर्मा for ॰तिहीन॰. १२ B न for मा. १३ B तेऽवीतरागासू for ते तीव्र॰.

अदान्तकायाश्च अदान्तवाचः[1]
अदान्तचित्ताश्च अपायनिम्नाः[2] ॥ ३० ॥

N 214
अहं च भाषेय्य गुणान वर्णान्
न चो गुणान् भिक्षु समाचरेय्या[3] ।
5
न घोषमात्रेण च बोधि लभ्यते[4]
प्रतिपत्तिसाराण[5] न बोधि दुर्लभा ॥ ३१ ॥

इति श्रीसमाधिराजे पूर्वयोगपरिवर्तो नाम षोडशः ॥ १६ ॥

---

१ C अदान्तचित्ता अदान्तवाचश्च. २ B अपार्पानिम्नाः for अपायनिम्नाः. ३ B समाधिसेव्या for समाचरेय्या. ४ AB लप्स्यते for लभ्यते. ५ C °साराह for °साराण.

## ॥ बहुबुद्धनिर्हारसमाधिमुखपरिवर्तः ॥

अथ[१] खलु भगवांस्तां महतीं सागरोपमां पर्षदं धर्मकथया[२] संदर्श्य[३] समुत्तेज्य संप्रहर्ष्य समादाप्य उत्थायासनात् प्राक्रामत् । येन च गृध्रकूटपर्वतराजस्तेनैव उपसमक्रामत् । उपसंक्रम्य च प्रज्ञप्त एवासने[४] न्यषीदत् । भिक्षुसंघपरिवृतो[५] देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्यनमस्कृतः सागरोपमायां पर्षदि धम संदेशयति[६] स्म । अथ खलु चन्द्रप्रभः कुमारभूतो भगवन्तं[७] निर्गतं विदित्वा अशीत्या प्राणिकोटीशतैः[८] सार्धं सर्वैर्देवभूतैरन्यलोक- 5 धात्वागतैश्च संबहुलैर्बोधिसत्त्वमहासत्त्वनियुतैः सार्धं पुष्पधूपगन्धमाल्यविलेपनं गृहीत्वा तूर्यशतैर्वाद्यमानैश्छत्रध्वजघण्टापताकाभिरत्युच्छ्रिताभिः महामाल्याभिनिर्हारमादाय भगवतः पूजाकर्मणे[९] येन गृध्रकूटपर्वतो[१०] येन च भगवांस्तेनोपजगाम । उपेत्य च भगवतः पादौ शिरसाभिवन्द्य भगवन्तं त्रिः प्रदक्षिणीकृत्य तैः पुष्पधूपगन्धमाल्यविलेपनैस्तूर्य[११]तालावचरैः प्रवाद्यमानैर्महतीं पूजां कृत्वा एकान्ते न्यषीदत् सगौरवः सप्रतीशो[१२] धर्मपरिपृच्छायै ॥ 10

N 215 N 216 N 217

अथ खलु[१३] चन्द्रप्रभः कुमारभूतो[१४] भगवन्तमेतदवोचत्—पृच्छेयमहं भगवन्तं तथागतमर्हन्तं सम्यक्संबुद्धं कंचिदेव प्रदेशं सचेन्मे भगवानवकाशं कुर्यात् पृष्टप्रश्नव्याकरणाय । एवमुक्ते भगवांश्चन्द्रप्रभं कुमारभूतमेतदवोचत्—पृच्छ त्वं कुमार तथागतमर्हन्तं सम्यक्संबुद्धं यद् यदेवाकाङ्क्षसि । नित्यकृतस्ते कुमार तथागतेनावकाशः । एवमुक्ते चन्द्रप्रभः कुमारभूतो[१५] भगवन्तमेतदवोचत्—कतिभिर्भगवन् धर्मैः समन्वागतो बोधिसत्त्वः[१६] इमं सर्वधर्मस्वभावसमता- 15 विपञ्चितं समाधिं प्रतिलभते ? एवमुक्ते[१७] भगवांश्चन्द्रप्रभं कुमारभूतमेतदवोचत्—चतुर्भिः कुमार धर्मैः समन्वागतो बोधिसत्त्वः इमं सर्वधर्मस्वभावसमताविपञ्चितं समाधिं प्रतिलभते । कतमैश्चतुर्भिः ? इह कुमार बोधिसत्त्वो महासत्त्वः सूरतो[१८] भवति सुविसंवासो[१९] दान्तो दान्तभूमिमनुप्राप्तः । स परैराक्रुष्टो वा परिभाषितो वा दुरुक्तानां[२०] दुर्भाषितानां वचनपथानां क्षमो भवत्यधिवासनजातीयः कर्मदर्शी निहतमानो धर्मकामः । अनेन कुमार प्रथमेन धर्मेण समन्वागतो बोधिसत्त्वो महासत्त्वः 20 इमं समाधिं प्रतिलभते । पुनरपरं कुमार बोधिसत्त्वो महासत्त्वः शीलवान् भवति । परिशुद्धशीलः

N 218

---

१ Before अथ, A B T read a passage given in App. I. (No. 18). २. B reads कथया संदर्शते समुत्तर्केसंप्रहर्ष for कथया...संप्रहर्ष्य. ३ AC संदिश्य for संदर्श्य. ४ For एवासने न्यषीदत्, A B T read : आसनात्प्रक्रामंस्तादृश्या एव च बुद्धद्धर्या राजगृहान्महानगरान्निष्क्रम्य तया तद्द्वारेणैव येन गृध्रकूटः पर्वतराजस्तेनोपसंक्रान्तः । उपसंक्रम्य च येन मैत्रेयाभिनिर्मितो रत्नमाडस्तेनोपसंक्रामदुपसंक्रम्य मैत्रेयाभिनिर्मिते महति रत्नसिंहासने न्यषीदत्. ५ After °परिवृतो, AB add बोधिसत्त्वसंघपुरस्कृतः. ६ A B देशयामास. ७ A B om. भगवन्तं निर्गतं विदित्वा. ८ A B °कोटीनियुतशतसहस्रैः for °कोटीशतैः; C ब्राह्मणकोटी° for प्राणिकोटी°. ९ After °कर्मणे, A B add राजगृहान्महानगराच्छिवद्वारेण निष्क्रम्य. १० A B °कूटः पर्वतराजो for °कूटपर्वतो. ११ A °विलेपनचूर्णचीवरच्छत्रध्वजपताकाभिस्तूर्य° for °विलेपनैस्तूर्य°. १२ A सप्रीतिकाः; B सप्रतीकः for सप्रतीशो. १३ After खलु, A B add: धर्मनारिपृच्छायैकान्तनिषण्णः. १४ After °भूतो, AB add: दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवांस्तेनाञ्जलिं प्रणम्य. १५ After °भूतो, A B add: भगवता कृतावकाशो. १६ A B °सत्त्वो महासत्त्वः for °सत्त्वः. १७ B om.: एवमुक्ते...प्रतिलभते. १८ A B शूरो for सूरतो. १९ A B सुखसंवादो for सुविसंवासो. २० A दुरुक्तदुरागतानां for दुरुक्तानां.

अखण्डशील: अच्छिद्रशील: अशबलशील: अकल्मषशील: अच्युतशील: अनाविलशील: अगर्हितशील: अभ्युद्गतशील: अनिश्रितशील: अपरामृष्टशील: अनुपलम्भशील: आर्यप्रशस्तशीलो विज्ञप्रशस्तशील: । अनेन कुमार द्वितीयेन धर्मेण समन्वागतो बोधिसत्त्वो महासत्त्व: इमं समाधिं प्रतिलभते । पुनरपरं कुमार बोधिसत्त्वो महासत्त्वस्त्रैधातुके उत्त्रस्तचित्तो भवति संत्रस्तचित्तो
5 निर्विण्णचित्तो नि:सरणचित्त:[१] । अनर्थिक: अनभिरत: अनध्यवसित: अनभिषक्त:[२] । सर्वत्रैधातुके उद्विग्नमानस: । अन्यत्र त्रैधातुकात् सत्त्वानि मोचयिष्यामीति व्यायमते । समुदागच्छत्यनुत्तरायां सम्यक्संबोधौ । अनेन कुमार तृतीयेन धर्मेण समन्वागतो बोधिसत्त्वो महासत्त्व इमं समाधिं
N 219 प्रतिलभते । पुनरपरं कुमार बोधिसत्त्वो महासत्त्व: श्राद्धो भवति । अतृप्तो भवति धर्मपर्येष्टयाम् । बहुश्रुतो भवति । विशारदो भवति । धर्मकामश्च धर्मगुरुक: । न लाभसत्कारश्लोकगुरुको न
1 ज्ञानगुरुक: । यथाश्रुतांश्च धर्मान् यथापर्यवाप्तान् परेभ्यश्च विस्तरेण देशयति संप्रकाशयति हितवस्तुपूर्वंगमेन चित्तेन न ज्ञात्रलाभकामनया । अपि तु खलु पुन: किमितीमे सत्त्वा इमान् धर्मान् श्रुत्वा अविनिवर्तनीया भवेयुरनुत्तराया: सम्यक्संबोधेरिति । अनेन कुमार चतुर्थेन धर्मेण समन्वागतो बोधिसत्त्वो महासत्त्व इमं समाधिं प्रतिलभते ॥

N 220 एभि: कुमार चतुर्भिर्धर्मै: समन्वागतो बोधिसत्त्वो महासत्त्व इमं सर्वधर्मस्वभावसमताविप-
15 ञ्चितं समाधिं प्रतिलभते क्षिप्रं चानुत्तरां सम्यक्संबोधिमभिसंबुध्यते । तदनेनापि ते कुमार पर्यायेणैवं वेदितव्यं यथायं समाधिर्बहुबुद्धदेशितो बहुबुद्धवर्णितो[३] बहुबुद्धसंप्रकाशितो बहुबुद्धप्रविचित: । बहूनां च बुद्धानां भगवतामन्तिकान्मया प्रव्रजित्वा अयं कुमार सर्वधर्मस्वभावसमताविपञ्चित: समाधिर्विस्तरेण श्रुत उद्गृहीत: पृष्टो धारितो वाचित: प्रवर्तितोऽरणभावनया भावितो बहुलीकृत: परेभ्यश्च विस्तरेण संप्रकाशित: । अथ खलु भगवानिममेव बहुबुद्धनिर्हारसमाधिमुखं पूर्वयोगकथानिर्देशं
20 भूयस्या मात्रया तस्यां वेलायां चन्द्रप्रभस्य कुमारभूतस्य विस्तरेण गाथाभिगीतेन[४] संप्रकाशयति स्म—

स्मरामि कल्पेऽतुलियाप्रमेये
यदा जिनो आसि स्वराङ्गघोष: ।
स्वराङ्गघोषस्य तथागतस्य
वर्ष शता षष्टि अभूषि आयु: ॥ १ ॥

25 तस्यानु बुद्धो परिमेण आसीत्
ज्ञानेश्वरो नाम नराणमुत्तम: ।
N 221 ज्ञानेश्वरस्य[५] द्विपदोत्तमस्य
वर्ष सहस्रा दश द्वौ च आयु: ॥ २ ॥

ज्ञानेश्वरस्यापि परेण बुद्धो
30 तेजेश्वरो नाम[६] जिनो अभूषि ।

---

१ A B om. नि:सरणचित्त:. २ A अनभियुक्त: for °षक्त:. ३ B om. बहुबुद्धवर्णितो. ४ B om. गाथाभिगीतेन. ५ A ज्ञानोत्तमस्य for ज्ञानेश्वरस्य. ६ B नाम अभूषि अन्य: for नाम जिनो अभूषि.

तेजेश्वरस्य द्विपदोत्तमस्य
षट्सप्तती वर्षसहस्र आयुः ॥ ३ ॥
तेजेश्वर[1]स्योपरतेन बुद्धो
मतीश्वरो नाम जिनो अभूषि ।
मतीश्वरस्य द्विपदोत्तमस्य 5
वर्षाण कोटी परिपूर्ण आयुः ॥ ४ ॥
मतीश्वरस्योप[2]रतेन बुद्धो
ब्रह्मेश्वरो नाम जिनो अभूषि ।
ब्रह्मेश्वरस्य द्विपदोत्तमस्य
चतुर्दशो वर्षसहस्र आयुः ॥ ५ ॥ 10
ब्रह्मेश्वरस्योपरतेन बुद्धो
अग्नीश्वरो नाम जिनो अभूषि ।
अग्नीश्वरस्य द्विपदोत्तमस्य
षष्टिस्तदा वर्षसहस्र आयुः ॥ ६ ॥
अग्नीश्वरस्योपरतेन बुद्धो 15
ब्रह्माननो नाम जिनो अभूषि ।
ब्रह्माननस्य द्विपदोत्तमस्य N 222
रात्रिंदिवा सप्त अभूषि आयुः ॥ ७ ॥
ब्रह्माननस्योपरतेन बुद्धो
गणेश्वरो नाम जिनो अभूषि । 20
गणेश्वरस्य द्विपदोत्तमस्य
षड्वर्षकोट्यः परिपूर्ण आयुः ॥ ८ ॥
गणेश्वरस्योपरतेन बुद्धो
घोषेश्वरो नाम जिनो अभूषि ।
घोषेश्वरस्य द्विपदोत्तमस्य 25
नववर्षकोट्यः परिपूर्ण आयुः ॥ ९ ॥
घोषेश्वरस्योपरतेन बुद्धो
घोषाननो नाम जिनो अभूषि ।
घोषाननस्य द्विपदोत्तमस्य
दशवर्षकोटयः परिपूर्ण आयुः ॥ १० ॥ 30

---

१ AC °श्वरस्याप्यपरेण for °स्योपरतेन. २ AC °स्योपरतेश्च for °परतेन. ३ A om. $6^{cd}$ and $7^{ab}$.

घोषाननस्योपरतेन बुद्ध-
श्चन्द्राननो नाम जिनो अभूषि।
चन्द्राननस्य द्विपदोत्तमस्य
रात्रिंदिवा एक अभूषि आयुः ॥ ११ ॥

N 223 5 चन्द्राननस्योपरतेन बुद्धः
सूर्याननो नाम जिनो अभूषि।
सूर्याननस्य द्विपदोत्तमस्य
अष्टादशो वर्षसहस्र आयुः ॥ १२ ॥

सूर्याननस्योपरतेन बुद्धो
10 ब्रह्माननो नाम जिनो अभूषि।
ब्रह्माननस्य द्विपदोत्तमस्य
त्रिविंशति[1] वर्षसहस्र आयुः ॥ १३ ॥

ब्रह्माननस्योपरतेन बुद्धो
ब्रह्मश्रवो नाम जिनो अभूषि।
15 ब्रह्मश्रवस्य द्विपदोत्तमस्य
अष्टादशो वर्षसहस्र आयुः ॥ १४ ॥

एकस्मि[2] कल्पस्मि इमे उपन्ना
दुवे[3] शते लोकविनायकानाम्।
श्रुणोहि नामानिह कीर्तयिष्ये
20 अनाभिभूतान तथागतानाम् ॥ १५ ॥

N 224 अनन्तघोषश्च विघुष्टघोषो[4]
विघुष्टतेजश्च विघुष्टशब्दः।
स्वराविघुष्टश्च स्वरार्चितश्च
स्वराङ्गशूरश्च स्वराङ्गशब्दः ॥ १६ ॥

25 ज्ञानावलो ज्ञानविशेषगश्च
ज्ञानाभिभूर्[5]ज्ञानसमुद्गतश्च।
ज्ञानार्चिमान् ज्ञान-अभ्युद्गतश्च
विघुष्ट[6]ज्ञानस्तथ ज्ञानशूरः ॥ १७ ॥

ब्रह्मावलो ब्रह्मवसुः सुब्रह्म
30 ब्रह्मा च देवस्तथ ब्रह्मघोषः।

---

१ C द्वात्रिंशतिं वर्षसहस्रमायुः for the line. २ C एकत्र for एकस्मि. ३ A दुवे शता; B दुवें शता. ४ C विशिष्टघोषो for विघुष्ट°. ५ B ज्ञानाभिभूतो for ज्ञानाभिभूः. ६ B विध्वस्त° for विघुष्ट°.

ब्रह्मेश्वरो ब्रह्मनरेन्द्रनेत्रे
　ब्रह्मस्वराङ्गः स्वरब्रह्मदत्तः ॥ १८ ॥
तेजोबलस्तेजवतिः सुतेजाः
　तेजेश्वरस्तेजसमुद्गतश्च
तेजोविभुस्तेजविनिश्चितश्च ।　　5
　तेजस्वरेन्द्रः सुविघुष्टतेजाः[1] ॥ १९ ॥
भीष्मो बलो भीष्ममतिः सुभीष्मो　　N 225
　भीष्माननो भीष्मसमुद्गतश्च ।
भीष्मार्चि भीष्मोत्तरु भीष्मघोषा
　एते जिना लोकविनायकाऽभूत् ॥ २० ॥　　10
गम्भीरघोषः शिरिधारणश्च[2]
　विशुद्धघोषेश्वरु शुद्धघोषः ।
अनन्तघोषः सुविमुक्तघोषो
　मारो बलो मारवित्रासनश्च ॥ २१ ॥
सुनेत्र शुद्धानतु नेत्रशुद्धो　　15
　विशुद्धनेत्रश्च अनन्तनेत्रः ।
समन्तनेत्रश्च विघुष्टनेत्रो
　नेत्राभिभूर्नेत्रअनिन्दितश्च ॥ २२ ॥
दान्तोत्तरो दान्त सुदान्तचित्तः
　सुदान्त शान्तेद्रिय शान्तमानसः ।　　20
शान्तोत्तरः[3] शान्तशिरी प्रशान्तः
　शान्तीय पारंगतु शान्तिशूरः ॥ २३ ॥
स्थितोत्तरः शान्त सुदान्तचित्तः　　N 226
　सुदान्तशान्तेन्द्रियु शान्तमानसः ।
शान्तोत्तरः शान्तश्रिया ज्वलन्तः　　25
　शान्तप्रशान्तेश्वरु शान्तिशूरः ॥ २४ ॥
गणेन्द्र गणमुख्यु गणेश्वरश्च
　गणाभिभूर्गणिवर शुद्धज्ञानी ।
महागणेन्द्रश्च गणेन्द्रशूरो
　अन्यो पुनो गणिवर प्रमोचकः[4] ॥ २५ ॥　　30
धर्मध्वजश्चो तथ धर्मकेतुः
　धर्मोत्तरो धर्मस्वभावउद्गतः ।

---

१ A सुविशुद्ध° for सुविघुष्ट°. २ AB शिरिवारणश्च. ३ B शान्ताननः for शान्तोत्तरः. ४ C विमोचकः.

धर्मबलश्चैव[1] सुधर्मशूरः
स्वभावधर्मोत्तरनिश्चितश्च ॥ २६ ॥
स्वभावधर्मोत्तरनिश्चितस्य
अशीतिकोट्यः सहनामधेयाः ।
5 द्वितीयकल्पस्मिः उत्पन्न नायका
एते मया पूजित बोधिकारणात् ॥ २७ ॥
स्वभावधर्मोत्तरनिश्चितस्य
यो नामधेयं श्रृणुते जिनस्य ।
N 227 श्रुत्वा च धारेति विघुष्ट नाम
10 स क्षिप्रमेतं लभते समाधिम्[2] ॥ २८ ॥
एतेष बुद्धान परेण अन्यो
अचिन्तिये अपरिमितस्मि कल्पे ।
अभूषि बुद्धो नरदेवपूजितः
स नामधेयेन नरेन्द्रघोषः ॥ २९ ॥
15 नरेन्द्रघोषस्य तथागतस्य
षट्सप्तती वर्षसहस्रमायुः ।
त्रयश्च कोटीशत श्रावकाणां
यः सन्निपातः प्रथमो अभूषि ॥ ३० ॥
षडभिज्ञ त्रैविद्य जितेन्द्रियाणां
20 महानुभावान महर्द्धिकानाम् ।
क्षीणास्रवाणान्तिमदेहधारिणां
संघस्तदा आसि प्रभाकरस्य ॥ ३१ ॥
अशीति कोटीनियुता सहस्रा
यो बोधिसत्त्वान गणो अभूषि ।
N 228 25 गम्भीरबुद्धीन[3] विशारदानां
महानुभावान महर्द्धिकानाम् ॥ ३२ ॥
अभिज्ञप्राप्ताः प्रतिभानवन्तो
गतिंगताः सर्वित शून्यतायाः[4] ।
ऋद्धीय गच्छन्ति ते[5] क्षेत्रकोटियो
30 ततोत्तरे यात्तिक गङ्गवालुकाः[6] ॥ ३३ ॥

---

१ A धर्मध्वजश्चैव. २ After समाधिम्, T adds a colophon, and A B add: अथ खलु भगवान् भूयस्या मात्रया इमं बहुबुद्धनिर्हारसमाधिमुखं पूर्वयोगपरिवर्तं चन्द्रप्रभस्य कुमारभूतस्य गाथाभिगीतेन विस्तरेण संप्रकाशयति स्म. ३ A गम्भीरप्रज्ञान for °बुद्धीन. ४ AB शून्यतायाम्; C शुद्धतायाः, ५ AB च for ते. ६ B C गङ्गवालिकाः for °वालुकाः.

प्रृच्छित्व प्रश्नं द्विपदान[1]नुत्तमान्  
　पुनेन्ति तस्यैव जिनस्य अन्तिके ।  
सूत्रान्तनिर्हारनिरुक्तिकोविदा  
　आलोकभूता विचरन्ति मेदिनीम् ॥ ३४ ॥

सत्त्वानमर्थाय चरन्ति चारिकां　　5  
　महानुभावाः सुगतस्य पुत्राः ।  
न कामहेतोः प्रकरोन्ति पापं  
　देवा पि तेषां स्पृह संजनेन्ति ॥ ३५ ॥

अनर्थिका भवग[2]तिषु न निश्रिताः  
　समाहिता ध्यानवि[3]हारगोचराः ।　　10  
विनिश्चितार्थाश्च विशारदाश्च　　N 229  
　निरामगन्धाः सद ब्रह्मचारिणः ॥ ३६ ॥

अच्छे[4]द्यवाक्याः प्रतिभानवन्तो  
　निरुक्तिनिर्देशपदार्थकोविदाः ।  
सर्वत्रसंदर्शक बुद्धपुत्राः　　15  
　परिगृहीताः कुशलेन कर्मणा ॥ ३७ ॥

अनन्तकल्पाश्चरियाय उद्गताः  
　स्तुताः प्रश[5]स्ताः सद नायकेहि ।  
विमोक्षतत्त्वार्थपदान देशकाः  
　असंकिलि[6]ष्टाः सुविशुद्धशीलाः ॥ ३८ ॥　　20

अनोपलिप्ताः पदुमेन वारिणा  
　विमुक्त त्रैधातुकतोऽप्रमत्ताः ।  
अनोपलिप्ताश्चिहि लोकधर्मै-  
　र्विशुद्धकायाः परिशुद्[7]धकर्माः ॥ ३९ ॥

अल्पेच्छ संतुष्ट महानुभावा　　25  
　अगृद्ध ते बुद्ध[8]गुणाः प्रतिष्ठिताः ।  
सर्वेष सत्त्वान गतिः परायणा　　N 230  
　न घोषमात्रप्रतिपत्तिसाराः ॥ ४० ॥

यत्र स्थितास्तं च परेषु देशयु  
　सर्वेहि बुद्धेहि परिगृहीताः ।　　30

---

१ A द्विपदानमुत्तमं for °ननुत्तमान्. २ A भवगतिदृष्टिअनिश्रिताः ; B भवगतिष्ट अनिश्रिता for भवगतिषु न निश्रिताः. ३ B ध्यानविचार for °विहार°. ४ A अनाच्छेद्यवाक्या ; B अनाक्षदेवां for अच्छेद्यवाक्याः. ५ B प्रस ाः for प्रशस्ताः. ६ B °किलिष्टानुविशुद्ध° for °किलिष्टाः सुविशुद्ध°. ७ AB परिशुद्धधर्माः °for कर्माः. ८ A °गुणप्रतिष्ठिताः

वैश्वासिकाः कोशधरा जिनानां
ते सर्वि त्रैधातुकि त्रस्तमानसाः ॥ ४१ ॥
प्रशान्तचित्ताः सद रण्यगोचरा
अधिष्ठिता लोकविनायकेभिः ।
5 भाषन्ति सूत्रान्तसहस्रकोटियो
यं चैव भाषन्ति त बुद्धवर्णितम् ॥ ४२ ॥
विवर्जिताः सर्वपदेभि लौकिकाः
शून्याधिमुक्ताः परमार्थदेशकाः ।
अनन्तवर्णा गुणसागरोपमाः
10 बहुश्रुताः पण्डित विज्ञवन्तः ॥ ४३ ॥
सचेत् कुमारो बहुकल्पकोटिय
अधिष्ठिहन्तः प्रवदेय[1] वर्णम् ।
स[2] अल्पकं तत् परिकीर्तितं भवेद्
यथा समुद्रादुदबिन्दुरेकः ॥ ४४ ॥
N 231 15 तस्मिंश्च काले स नरेन्द्रघोषो
देशेतिमं शान्त समाधि दुर्दशम् ।
महात्रिसाहस्रिय लोकधातु
देवेहि नागेहि स्फुटो अभूषि ॥ ४५ ॥
तस्यो इमं शान्त समाधि भाषतः
20 प्रकम्पिता मेदिनि षड्विकारम् ।
देवा मनुष्या यथ गङ्गवालिका
अविवर्तिकाये स्थित बुद्धज्ञाने ॥ ४६ ॥
तत्रासि राजा मनुजान ईश्वरः
शिरीबलो नाम महानुभावः ।
25 पुत्राण तस्यो शत पञ्च आस-
न्नभिरूप प्रासादिक दर्शनीयाः ॥ ४७ ॥
अशीति कोटीशत इस्त्रियाणा-
मन्तःपुरं तस्य अभूषि राज्ञः ।
चतुर्दशो कोटिसहस्र पूर्णा
30 दुहितरो[3] तस्य अभूषि राज्ञः ॥ ४८ ॥
स कार्तिकायां तद पूर्णमास्या-[4]
मध्याह्निकं पोषधमाददित्वा ।

---

१ A प्रभणेय्य वाचम्; B प्रभशेषवाचम् (?). २ AB अत्यल्पकं for स अल्पकं. ३ A धीतरो तस्य अभूषि भूपतेः for the line. ४ A पूर्णिमायाम् for पूर्णमास्याम्.

अशीतिकोटीनियुतेहि सार्ध- N 232

मुपागमल्लोक[1]गुरुस्य अन्तिकम् ॥ ४९ ॥

वन्दित्व पादौ द्विपदोत्तमस्य

न्यषीदि राजा पुरतो जिनस्य ।

अध्याशयं तस्य विदित्व राज्ञो 5

इमं समाधिं द्विपदेन्द्र देशयि ॥ ५० ॥

स[2] पार्थिवः श्रुत्व समाधिमेत-

मुत्सृज्य राज्यं यथ खेटपिण्डम् ।

परित्यजित्वा प्रिय ज्ञातिबान्धवान्[3] N 233

स प्रव्रजी तस्य जिनस्य शासने[4] ॥ ५१ ॥ 10

पुत्राण पञ्चाशत प्रव्रजिंसु

अन्तःपुरं चैव तथैव धीतरो ।

अन्ये च तत्र पुत्र[5]ज्ञातिबान्धवाः

षट्सप्ततिर्नयुत त्रयश्च कोट्यः ॥ ५२ ॥

स प्रव्रजित्वेह सपुत्रदारं 15

स्थपेत्व आहारनिर्हार[6]भूमिम् ।

अधिष्ठितश्चंक्रमि अष्टवर्षं

स चंक्रमे वस्थितु काल कार्षीत् ॥ ५३ ॥

स कालु कृत्वा तद राजकुञ्जरो

समाधिचित्तो सुसमाहितः सदा । 20

तत्रैव सो राजकुले उपन्नो N 234

उपपादुको गर्भमलैरलिप्तः ॥ ५४ ॥

दृढबलो नाम पितास्य भूषि

महामती नाम जनेत्रि आसीत् ।

स जातमात्रो अवची[7] कुमारो 25

कच्चिन्नु[8] सो तिष्ठति लोकनाथः[9] ॥ ५५ ॥

जानाति मे आशयु लोकनाथो

येनो ममा शान्त समाधि देशितः ।

---

१ C लोकविदुष्यमन्तिके. २ In B, st. 51 and a few more appear here and they are given in App. I (No 19.)° In A and C they appear elsewhere as indicated in notes to passage No 18. ३ B °बान्धवम् for °बान्धवान्. ४ AB अन्तिकं for शासने. ५ A B पृथुज्ञाति° for पुत्रज्ञाति°. ६ A °विहार° for °निर्हार°. ७ B प्रव्रजी for अवची. ८ C अद्यापि for कच्चिन्नु. ९ After st. 55, AB add : यो भाषते धर्मविरागहेतोर्भाषित्व धर्मं द्विपदानमुत्तमो ( A °त्तमं° ) । सत्त्वान अर्थं प्रकरोति नायको कच्चिज्जिनो भाषति तं समाधिम् ॥ B reads अद्यापि सो तिष्ठति लोकनाथः for the last pāda.

अप्रत्यया अपगतप्रत्यया च
यो एक निर्देशु भवे गतीनाम् ॥ ५६ ॥

या सर्वधर्माण स्वभावमुद्रा
यः सूत्रकोटीनियुतान आगमः।
5 यो बोधिसत्त्वान धनं निरुत्तरं
कच्चिज्जिनो भाषति तं समाधिम् ॥ ५७ ॥

N 235 कायस्य शुद्धी तथ वाच शुद्धी
चित्तस्य शुद्धिस्तथ दृष्टिशुद्धिः।
आरम्बणानां समतिक्रमो यः
10 कच्चिज्जिनो भाषति तं समाधिम् ॥ ५८ ॥

अविप्रणाशः फलधर्मदर्शनं
अष्टाङ्गिका मार्गवरस्य भावना।
तथागतैः संगमु तीक्ष्णप्रज्ञता
सत्यप्रवेशः सद धर्मज्ञानम् ॥ ५९ ॥

15 स्कन्धपरिज्ञा समता च धातुना-
मपकर्षणं चायतनान सर्वशः।
अनुत्पाद साक्षात्क्रिययावतारः
कच्चिज्जिनो भाषति तं समाधिम् ॥ ६० ॥

प्रतिसंविदा शान्त्यवतारज्ञानं
20 सर्वाक्षराणां च प्रभेदज्ञानम्।
वस्तुनिवेशसमतिक्रमो यः
कच्चिज्जिनो भाषति तं समाधिम् ॥ ६१ ॥

घोषः परिज्ञाथ प्रामोद्यलाभः[२]
प्रीतिश्च भोती सुगतान[३] वर्णम्।
N 236 25 आर्या गतिर्मार्दवता च उज्जुका
कच्चिज्जिनो भाषति तं समाधिम् ॥ ६२ ॥

ना जातु कुर्याद्भृकुटिं स सूरतः
साखिल्य माधुर्य स्मितं मुखं च।
दृष्ट्वा च सत्त्वान्[४] प्रथमालपेति
30 कच्चिज्जिनो भाषति तं समाधिम् ॥ ६३ ॥

---

१ A om. sts 58-61. २ A प्रथमायलाभः for प्रामोद्य°. ३ BC सुगतस्य for सुगतान. ४ A धर्मान् for सत्त्वान्.

अनालस्यता गौरवता गुरूणां
 शुश्रूषणा वन्दन[1] प्रेमदर्शना ।
उपपत्ति संतुष्टित शुक्लता च
 कच्चिज्जिनो भाषति तं समाधिम् ॥ ६४ ॥

आजीवशुद्धिस्तथ रण्यवासो  5
 धूते स्थितानुस्मृतेरप्रमोषः ।
स्कन्धेषु कौशल्यमथापि धातुषु
 कच्चिज्जिनो भाषति तं समाधिम् ॥ ६५ ॥

आयतनकौशल्यमभिज्ञज्ञानं  N 237
 क्लिेशे[2]-अपकर्षण दान्तभूमि ।  10
पृथुसर्वमन्त्राणमसाधुच्छेदः
 कच्चिज्जिनो भाषति तं समाधिम् ॥ ६६ ॥

समतिक्रमः सर्वभवगतीनां
 जातिस्मृति धर्मनिष्काङ्क्षता च ।
धर्मे च चित्तं श्रुत एषणा च  15
 कच्चिज्जिनो भाषति तं समाधिम् ॥ ६७ ॥

विशेषगामी सद भावनारति
 आपत्ति कौशल्यत निःसृतौ स्थितः ।
यत्र स्थितोऽनुशयितां जहाति
 कच्चिज्जिनो भाषति तं समाधिम् ॥ ६८ ॥  20

तीक्ष्णस्य ज्ञानस्य वरागमो यतो
 अचालियो[3] शैलसमो अकम्पितः[4] ।
अविवर्तिताल्लक्षण धारणीमुखं
 कच्चिज्जिनो भाषति तं समाधिम् ॥ ६९ ॥

शुक्लान धर्माण सदा गवेषणा  25  N 238
 पापान धर्माण सदा विवर्जना ।
संक्लेशपक्षस्य सदा प्रचारु यो
 कच्चिज्जिनो भाषति तं समाधिम् ॥ ७० ॥

सर्वासु शिक्षासु गतिंगतो विदुः
 समाध्यवस्थानगतिंगतश्च ।  30

---

१ A दर्शन for वन्दन. २ A B क्लिेशमुपकर्षण दान्तभूमिं for the line. ३ A अचालितो for °लियो. ४ A B अकम्पियः for °म्पितः.

सत्त्वान चो आशयु ज्ञात्व चोदको
देशेति धर्मं वरबुद्धबोधौ ॥ ७१ ॥
विशेषज्ञानं उपपत्तिज्ञानं
अनन्तज्ञानं सुसमासज्ञानम्[1]।
5 सर्वंगतीनां प्रतिसंधिज्ञानं
कच्चिज्जिनो भाषति तं समाधिम् ॥ ७२ ॥
गृहान्[2] समुत्सृज्य प्रव्रज्यचित्तं
त्रैधातुके अनभिरती ननुग्रहः।
चित्तस्य संप्रग्रहणं सहर्षणा
10 देशेति धर्मं द्विपदानमुत्तमः ॥ ७३ ॥
धर्मेषु चो नाभिनिवेश तायि
परिग्रहो धर्मवरे सदा च।
N 239 कर्मविपाके[3] च दृढाधिमुक्तिं
देशेति धर्मं द्विपदानमुत्तमः ॥ ७४ ॥
15 विनेयस्मि[4] कौशल्य विपाकज्ञानं
कलहं विवादान तथोपशान्तिः।
अविग्रहं वाप्यविवादभूमिं
देशेति धर्मं द्विपदानमुत्तमः ॥ ७५ ॥
क्षान्तीसमादानमक्रोधस्थानं
20 विनिश्चये धर्मि सदा च कौशलम्।
पदप्रभेदेषु च ज्ञानदर्शनं
देशेति धर्मं करुणां जनेत्वा ॥ ७६ ॥
पूर्वान्तज्ञानमपरान्तज्ञानं
त्रियध्व-समता सुगतान शासने।
25 परिच्छेद उक्तः स त्रिमण्डलस्य
एवं जिनो देशयि धर्मस्वामी[5] ॥ ७७ ॥
चित्तव्यवस्थान[6] एकाग्रता च
कायव्यवस्थान यथार्यभूमिः।
N 240 ईर्यापथस्थो सद कालि रक्षणा[7]
30 देशेति धर्मं पुरुषर्षभो मुनिः ॥ ७८ ॥

---

१ B सुसमाधिज्ञानम् for सुसमास°. २ A B गृहवासमुत्सृज्य for गृहान् समुत्सृत्य. ३ A om. कर्मविपाके च. ४ AB विनयस्य for °यस्मि. ५ AB धर्मदेशनां for धर्मस्वामी. ६ A °स्थानमभेद्यता for °स्थान एकाग्रता. ७ A लक्षणा for रक्षणा.

हिरिश्च ओत्राप्यु प्रासादिकं च
युक्तां गिरं भाषति लोकज्ञानम्।
प्रवृत्तिधर्मं प्रकृतिं च प्राणिनां
देशेति धर्मं वरबोधिमग्र्याम्॥ ७९॥
5
अनुग्रहं चो हिरिमोत्राप्यं च
चित्तस्य चाकुशलता जुगुप्सना।
धूतस्यानुत्सर्गत पिण्डचर्या
देशेति धर्मं द्विपदानमुत्तमः॥ ८०॥
हिरिश्च ओत्राप्यु सदाचरेता[१]
10
गुरूणाभिवादन प्रत्युत्थानम्।
मानस्य चो निग्रह आदितैव
एवं जिनो देशयि धर्मस्वामी॥ ८१॥
N 241
चित्तसमुत्थानत चित्तकल्यता
ज्ञानप्रतीवेधु तथानुबोधम्।
15
अज्ञानपक्षस्य सदा विवर्जना
देशेति धर्मान् वरबुद्धबोधिम्॥ ८२॥
चित्तप्रवेशं च रुतस्य ज्ञानं
निरुक्त्यवस्थान विनिश्चितार्थम्।
सर्वेष्वनर्थान सदा विवर्जनम्
20
एवं जिनो देशयि धर्मस्वामी॥ ८३॥
ससङ्गता सत्पुरुषेहि नित्यं
विवर्जना कापुरुषान चैव।
जिने प्रसादं सद प्रेमतां च
एवं जिनो देशयि धर्म श्रेष्ठम्॥ ८४॥
25
संकेतप्रज्ञप्तिव्याहारतां च
संसारदुःखानि सदा विवर्जना।
अलाभि लाभे च असंक्तभाव-[२]
मेवं जिनो देशयि धर्ममुत्तमम्॥ ८५॥
N 242
सत्कारु लब्ध्वा च न विस्मयेय्या
30
असत्कृतश्चापि भवेदुपेक्षकः।
भूतेऽपि वर्णे न कदाचि मोदिये
इय देशना लोकहितस्य ईदृशी॥ ८६॥

---

१ A हिरिं च ओत्राप्यु सवासना चरेत् for the line. २ A असक्तभावना for °भावम्.

आक्रोशनां पंसन सर्वशो सहे-
दसंस्तवः सर्वगृहीहि सार्धम्।
संसर्गतां प्रव्रजितेन कुर्या-
देवं जिनो देशयि धर्मस्वामी ॥ ८७ ॥

5 बुद्धान चो गोचरि सुप्रतिष्ठितो
अगोचरं सर्व विवर्जयित्वा।
आचारसंपन्न सुदान्तचित्तो
इय धर्मनेत्री सुगतेन देशिता ॥ ८८ ॥

ये बालधर्माः सद [1]तान् विवर्जयेत्
10 कुलदूषणं सर्व विवर्जयेच्च।
N 243 आरक्षितव्यं सद बुद्धशासनं
एवं जिनो देशयि धर्मस्वामी ॥ ८९ ॥

अल्पं च भाष्ये मधुरं सुयुक्तं
कल्याणतां मृदुवचनं परेषाम्।
15 प्रत्यर्थिकानां सहधर्मनिग्रहो
इयं जिने ईदृश आनुशासनी ॥ ९० ॥

प्रतिक्रमेत् कालि न चो अकाले
न विश्वसेत् सर्वपृथग्जनेषु।
दुःखेन स्पृष्टो न भवेत दुर्मना
20 इयं जिने ईदृश आनुशासनी ॥ ९१ ॥

दरिद्र दृष्ट्वा सधनं करेय्या
दुःशील दृष्ट्वा अनुकम्पितव्या।
हितवस्तुतायां सद ओवदेय्य
इयं जिने ईदृश आनुशासनी ॥ ९२ ॥

25 धर्मेण सत्त्वा अनुगृह्णितव्या
लोकामिषत्यागु सदा च कार्यो।
N 244 न संचयं नो निचयं च कुर्या-
दियं जिने ईदृश आनुशासनी ॥ ९३ ॥

शीलप्रशंसा च कुशीलकुत्सना
30 अशाठ्यता शीलवतां निषेवणम्।
सर्वस्वकात्यागि धनेऽप्यनिश्रितो[2]
इयं जिने ईदृश आनुशासनी ॥ ९४ ॥

---

१ A B विवर्ज्या for विवर्जयेत्; २ B धनेऽप्यनिःसृतो.

[1]अध्याशयेनो गुरुणा निमन्त्रणा
यथा च भावे तथ सर्वं कुर्याम् ।
अभीक्ष्ण सेवेय्य च धर्मभाणकं
इयं जिने ईदृश आनुशासनी ॥ ९५ ॥

सगौरवः प्रीतमनाः सदा भवेत् 5
सोम्याय दृष्टीय सदा स्थितो भवेत् ।
पूर्वासु चर्यासु सुनिश्चितः सदा
इयं जिने ईदृश आनुशासनी ॥ ९६ ॥

पूर्वंगमः कुशलचरीषु नित्य-
मुपायकौशल्य निमित्तवर्जने । 10
संज्ञाविवर्ते तथ वस्तुलक्षणे
इयं जिने ईदृश आनुशासनी ॥ ९७ ॥

सूत्रान्तनिर्हारपदेषु कौशलं N 245
सत्यान निर्देशपदेषु निश्चयः ।
विमुक्तिज्ञानस्य च साक्षिकारिता 15
इयं जिने ईदृश आनुशासनी[2] ॥ ९८ ॥

शून्याश्च धर्माः सद सेवितव्या
विशारदाः शीलबले प्रतिष्ठिताः ।
समाधिस्थानेन समोत्तरेय्या
इयं जिने ईदृश आनुशासनी ॥ ९९ ॥ 20

न ज्ञात्रलाभं पि कदाचि देशये-
च्चित्तस्य चापी कुहनां न कुर्यात् ।
दृष्टीकृतां सर्वं विवर्जयेच्च
इयं जिने ईदृश आनुशासनी ॥ १०० ॥

[3]प्रतिभानु श्रेष्ठं वर धारणीये 25
ज्ञानस्य चोभासु अनन्तपारो ।
अधिष्ठानमन्त्र प्रतिभानयुक्ति- N 246
रियं जिने ईदृश आनुशासनी ॥ १०१ ॥

---

१ B om. sts. 95–99 here. See App. I ( No. 18 ). २ After st. 98, A T add :
एकांशतो वाचमुदाहरेय्या यथार्थदर्शी कुशलो विनिश्चये ।
निष्कांक्ष वाचाय सदा भवेय्या इयं जिने ईदृश आनुशासनी ॥

३ B om. st. 101.

शीलस्य द्वारमिम मार्गभावना
प्रतिपत्ति-ओवाद-नयश्च भद्रको।
अनुशासनी अत्र चरित्व शासनी
[1]इयं जिने ईदृश आनुशासनी ॥ १०२ ॥

अनुलोमिकी क्षान्ति य बुद्धवर्णिता
क्षान्तिस्थितो दोष विवर्जयेत।
अज्ञान वर्जेय्य स्थिहित्व ज्ञाने
इयं जिने ईदृश आनुशासनी ॥ १०३ ॥

[2]ज्ञानप्रतिष्ठा तथ योगभूमी
योगेश्वरी बोधयि प्रस्थितानाम्।
निषेवणा सत्पुरुषाण नित्यं
इयं जिने ईदृश आनुशासनी ॥ १०४ ॥

अयुक्तयोगीन सदा विवर्जना
तथागतैर्भाषित बुद्धभूमि।
अनुमोदिता सर्विहि पण्डितेहि
इयं जिने ईदृश आनुशासनी ॥ १०५ ॥

बालैः प्रतिक्षिप्त [3]अज्ञातकेहि
अभूमिरत्र पृथुश्रावकाणाम्।
परिगृहीताः सद बोधिसत्त्वैः
इयं जिने ईदृश आनुशासनी ॥ १०६ ॥

तथागतेहि अनुबुद्धमेतं
देवेहि चो सत्कृतु पूजितं च।
अनुमोदितं ब्रह्मसहस्रकोटिभिः
कच्चिज्जिनो भाषति तं समाधिम् ॥ १०७ ॥

नागसहस्रेहि सदा [4]सुसत्कृतं
सुपर्णयक्षेहि च किन्नरेहि।
या भाषिता बोधिवरा जिनेभिः
कच्चिज्जिनो भाषति तं समाधिम् ॥ १०८ ॥

पर्याप्त या नित्यु सुपण्डितेहि
धनं च श्रेष्ठं प्रवरं सुलब्धम्।

---

१ A om. st. 102 d and 103 a. २ A B om. st. 104. ३ A अज्ञानकेहि for अज्ञात°. ४ A नमस्कृतं for सुसत्कृतं.

निरामिषं ज्ञान चिकित्स उत्तमा
कच्चिज्जिनो भाषति तं समाधिम् ॥ १०९ ॥
ज्ञानस्य कोषः प्रतिभानमक्षयं N 248
सूत्रान्तकोटीन प्रवेश एषः ।
परिज्ञ त्रैधातुकि भूतज्ञानं 5
कच्चिज्जिनो भाषति तं समाधिम् ॥ ११० ॥
नौका इयं देशित पारगामिनां
नावा पि चो ओघगतान एषा ।
कीर्तिर्यशो वर्धति[1] वर्णमाला
येषामयं शान्त समाधि देशितः ॥ १११ ॥ 10
प्रशंस एषा च तथागतानां
स्तवश्च एषो पुरुषर्षभाणाम् ।
स्तव बोधिसत्त्वान नयश्च अक्षयो
येही अयं शान्त समाधि देशितः ॥ ११२ ॥
मैत्री इयं दोषशमे प्रकाशिता 15
उपेक्षियं कारुणिकान भूमिम् ।
आश्वासयन्तेष महाशयानां
येषां कृतेनैष समाधि भाषितः ॥ ११३ ॥
प्रतिपत्तियं देशित सिंहनादिना- N 249
मितु बुद्धज्ञानस्य वरस्य आगमः । 20
सर्वेष धर्माण स्वभावमुद्राः
समाध्ययं देशितु नायकेहि ॥ ११४ ॥
सर्वज्ञज्ञानस्य च आहरित्रिमा
चर्या इयं बोधयि प्रस्थितानाम् ।
वित्रासनं मारचमूय चापि 25
समाध्ययं शान्त जिनेन देशितः[2] ॥ ११५ ॥
विद्या इयं धर्मस्थितान तायिनां[3]
अमित्रमध्ये परमा च रक्षा ।
प्रत्यर्थिकानां सहधर्मनिग्रहाः
समाध्ययं शान्त जिनेन देशितः ॥ ११६ ॥ 30

---

१ C भवति for वर्धति. २ After st. 115, C adds :
अनुबुद्धज्ञानस्य वरस्य आगमो सर्वेष धर्मान स्वभावमुद्रा ।
अनुत्पाद शान्त वरधर्ममुद्रा समाध्ययं देशित नायकेन ॥
३ B गायिता; T seems to support गायिता against A and C.

